बालार्क-वेदमन्दिरस्य तृतीयं पुष्पम्

[—* ओ३म् *—]

# षट्कर्मशास्त्रम्

## पेंशनभाष्योपेतम्

वाराणसेयाऽर्जुनायुर्वेदमहाविद्यालयप्रधानाचार्य्याणां, झांसीस्थबुन्देलखण्डायुर्वेदविश्वविद्यालयालंकर्तृणां, पञ्चालप्रान्तान्तर्गतरोपणजनपदीयचूर्णियांग्रामवासिनां, दिवंगतानां, प्रातःस्मरणीयच्छ्रीलालचन्द्रवैद्यप्रवराणां, वाराणसेयबड़ागांवायुर्वेदमहाविद्यालयसंस्थापकाध्यक्षसञ्चालकानां, दिवंगतानां, श्रीवलदेववैद्यवरेण्यानां, पञ्चकर्मचिकित्साखिलदेशलब्धकीर्तीनाञ्च, शिष्येण, शिक्षाशास्त्रपरमाणुदर्शनकारेण, सांख्य-योग-व्याकरणायुर्वेदाचार्य्येण, चित्रा-चार्योपनाम्ना, जगदीशाचार्येण प्रणीतम् ।



प्रकाशिका

श्रीमती गायत्रीदेवी

अध्यक्षा-बालार्कसंस्कृतानुसन्धानाश्रमः

बालार्क वेद मन्दिरं महसीबाजार

बहराइच (उ० प्र०)

मुद्रक

श्री पं० नन्दकुमार अवस्थी

वाणी प्रेस, ४०५/१२८, चौपटियाँ रोड, लखनऊ-३

प्रथमवारे १०००

फाल्गुन सं० २०२७
दयानन्दाब्द १४७
फ़र्वरी १९७१

अजिल्द ८·००
सजिल्द ९.००

# चित्राचार्योपनाम्ना जगदीशाचार्येण प्रणीतानि शास्त्राणि
## बालार्क वेदमन्दिर प्रकाशनानि

| | | | |
|---|---|---|---|
| १. शिक्षाशास्त्रम् | ४) | सजिल्द | ५) |
| २. परमाणुदर्शनम् (गायत्रीभाष्यालंकृतम्) | ५) | ,, | ६) |
| ३. षट्कर्मशास्त्रम् (आयुर्वेदाचार्यपरीक्षोपयोगि) | ८) | ,, | ९) |
| ४. अरबीशिक्षाशास्त्रम् (हिन्दी-उर्दूभावार्थोपेतम्) | ४) | ,, | ५) |
| ५. परमाणुदर्शनम् सन्ध्यामनोरमानामकसूत्रार्थ भाष्यार्थयुक्तमूलसूत्रात्मक हिन्दी संस्करणम् | ५) | ,, | ६) |
| ६. पाथेयम् सर्वेषां, विशेषेण पर्यटकाणां कृते परमोपयोगि परममधुरं सरसं धार्मिकं ऐतिहासिकं भौगोलिकं वाराणसीतो द्वारिकापर्यन्तं ग्रामनागमनमार्गागतप्रदेश-नगरवननदी - तीर्थनरनारीस्वभावप्रथादि-वर्णनयुतं श्रृङ्गाररसप्रधानं सहृदयानां रसिकहृदयानां च परममनोविनोदकं मेघदूतसदृशं सरल-संस्कृत-गीतिकाव्यम् हिन्दीटीकोपेतम् । | ५) | ,, | ६) |



पुस्तक-प्राप्ति-स्थानम्
श्रीमती गायत्रीदेवी
अध्यक्षा—बालार्कसंस्कृतानुसन्धानाश्रमः
बालार्क वेदमन्दिरं महसीबाजार
बहराइच (उ० प्र०)

# भूमिका

षट्कर्मानुशासनलेखक: श्रीजगदीशाचार्यो न केवलं प्रार्थयते अपि चाऽनुरुन्धेऽपि यदहमस्य ग्रन्थस्य भूमिकां लिखेयमिति तत्पालयामि तदनुरोधम् ।

षट्कर्मानुशासनम् यद्यपि भारतीयाऽऽयुर्वेदानुशासने सत्स्वपि जीवन-वृंहण-लंघन-तर्पणा-पतर्पण-दीपन-पाचन प्रभृतिषु नाना विध कर्मसु वमनादि पञ्चकर्मणामेव ।। पञ्चकर्म ।। संज्ञा सुप्रसिद्धा वर्त्तते परन्तु प्रस्तुते ग्रन्थे षट्कर्मणां नाऽतिसंक्षेपविस्तरं वर्णनं कृतमाचार्य-महाशयेन । सर्वोऽपि हि विचारशीलो मनीषी लेखने भाषणे वा स्वतन्त्रोऽस्ति स्वातंन्त्र्ययुगेऽस्मिन्। स स्वविचारं विदुषां पुरतः समुपस्थापयितु शक्नोति, अन्यच्च-अत्र ग्रन्थे लेखकेन पञ्चकर्मभिः सह एकं रक्तस्रावणं कर्माऽपि योजितं नाऽयमपराध. कोऽपि ।

लोकोक्तिश्चेयं चरितार्था यथा—

'लीक लीक गाड़ी चलै लीकै चलै कुपूत

लीक छांड़ि तीनों चलैं शायर सिंह सुपूत ।'

तथापि यद्भवतु तद्भवतु, लेखकेन यः पन्थः सोत्साहमनुसृतः स परं प्रमोदस्थानं स्यात् प्रेक्षावताम् ।

प्रस्तुते ग्रन्थे षोडशमयूखाः सन्ति ते सर्वेऽपि भास्कर-मयूखवत् षट्कर्मविषयकस्य ज्ञेयस्य बोधकत्वेन प्रकाशकाः, चन्द्रमयूख-वच्च सहृदयानामाह्लादका, भविष्यन्ति । इत्यत्र नास्ति सन्देहलेशः । तस्मादसन्देहं वक्तुं च शक्यते यदयं ग्रन्थः षोडश-कलापरिपूर्णः चन्द्रः कोकलोकमिव चिकित्सक लोकं सर्वदा प्रसादयिष्यति प्रसादयन् प्रेरयिष्यति प्रेरयंश्च सफलयिष्यति इति मे दृढ़ो विश्वासः ।

१. प्रथमे मयूखे—षट्कर्मोपपत्तिः प्रदर्शिता साधिता च सयुक्तिक्रमेण स्वदृष्टि-कोणानुसारम् । २. द्वितीये मयूखे—कतिविधा दोषापत्तिः कस्यां किं कर्त्तव्यमित्यादिकं समुपदर्शितम् । ३. तृतीये—केन कर्मणा कस्य दोषस्य निर्हरणं कार्यमित्यादिकं समुद्दिष्टम् । ४. चतुर्थे—कर्मणां पूर्वकर्म-पश्चात्कर्मणोः करणस्यात्यावश्यकता प्रदर्शिता । ५. पञ्चमे—केषामेव स्नेहादिकं कर्मकार्यामिति निर्दिष्टम् । ६. षष्ठे—स्नेहादिकानां सम्यग्योगादीनां लक्षणानि निर्दिष्टानि इति । ७. सप्तमे—स्नेहनादिषु क्रियमाणेषु सम्भाविनीनां व्यापदां वर्णनम् । ८. अष्टमे—स्नेह्यस्वेद्यादिकानां वर्णनंम् । ९. नवमे-स्नेहानां विशदं वर्णनम् । १०. दशमे—स्वेदानां स्वेदविधीनां च वर्णनम् । ११. एकादशे—वमन—विरेचन वर्णनम् । १२. द्वादशे—वस्ति-वर्णनम् । सोऽयं मयूखो मयूखराजः । १३. त्रयोदशे—नस्यकर्मवर्णनम् । १४. चतुर्दशे—रक्तमोक्षणवर्णनम् । १५. पञ्चदशे—उत्तरवस्तिवर्णनम् १६. षोडशे—महा-मयूखाऽभिधे लेपाऽभ्यंगादिनानाविधोपचाराणां स्वानुभवसिद्धं विशदं वर्णनमिति विषय-संग्रहः । सर्वमेवैतत् समवलोक्य समालोचनया विचार्य च विश्वासः कर्त्तुं शक्यते यदेतत् षट्कर्माऽनुशासनं भिषज्यतां भिषजामुपकारकरमायुर्वेदसाहित्यस्य च श्रीवृद्धिकरं सम्पत्स्यते ।

अस्य ग्रन्थस्य लेखकः "आत्मीयः" इत्यतो नाधिकं प्रशस्यते। आत्मीयस्य हि अधिका प्रशंसा समुचिता न प्रतिभाति नापि चाऽपेरभ्यो रोचते कदाचित्। श्रोतृणा-मुद्वेगकरी च स्यात् - तथापि अस्य प्रयासस्तु प्रशंसनीय एव स्यात् अभिनन्दनीयश्च।

**लेखक महाशयेनाऽस्य ग्रन्थस्य लेखनपद्धतिः संवाऽवलम्बिता या खलु कणादगौतमादिभिः पुरातनैः दर्शनलेखकैः पुरातन कालेआलम्बिताऽभूत् अनयैव पद्धत्याऽनेन परमाणु-दर्शनमपिविरचितं यद्दार्शनिकानां विनोदकं प्रमोदकं च भविष्यति। तदपि भविष्यति काले वैशेषिकादिदर्शनेषु एकतमं दर्शनं भावीति मे विश्वासः।**

एतेन च द्वित्राणि काव्यानि तद्यथा पाथेयं, यौवनं ज़ादेसफ़रमित्यपि लिखितानि यानि चास्य विलक्षणां कविताशक्ति प्रदर्शयन्ति कविता-रसिकाश्च तानि विलोक्य प्रसादं प्राप्स्यन्ति यदा तानि प्रकाशनमेष्यन्ति।

राजकीय चिकित्सालयेषु यत्र तत्र नैमिषाऽऽरण्यप्रभृतिषु चिकित्साकर्मकुर्वता कर्मठेनानेन सर्वमेवैतत् सम्पादितमिति चाऽन्यत्प्रमोदस्थानम्। पठनकालेऽपि चाऽनेन कठोरं तपस्तप्तम् व्यायामेन शरीरं दृढ़ी कृतम् सन्ध्यादियोगाभ्यासेन मनोबलं सञ्चितम् सतताऽध्ययनेन विद्यासमर्जिता, गुरुशुश्रूषया गुरवः सन्तोषिताः। विचारविनिमयेन विद्यार्थिनो विनीता, शास्त्रार्थेन प्रतिवादिनः पराजिताः। भाष्यान्तं व्याकरणधीत्य व्याकरणाऽऽचार्योपाधिः सांख्यदर्शनमभ्यस्य सांख्याचार्यपदवी, योगदर्शनमधीत्य च योग दर्शनाचार्य-पदवी-गृहीता, मत्समीपेच आयुर्वेदाऽध्ययनं विधाय आयुर्वेदाचार्य पदवी समादत्ता, वाराणसी समीपवर्त्ति बड़ागांव, निवासिनां श्रीवलदेववैद्यमहानुभावानां समीपे निवसता पञ्चकर्मक्रियाकलापं दृष्ट्वा तत्कर्मसु दृष्टकर्मता कृतकर्मता च समुपलब्धा। मयैव सह झांसी विश्वविद्यालयेऽत्राऽऽगत्य च अष्टांगसंग्रहादिकमधीत्य, रोगिनिरीक्षणौ-षधनिर्माणादि कर्मकौशलं संम्प्राप्य स्नातकोत्तप्रशिक्षण सम्प्राप्तम्। तत्पश्चाच्च जामनगरीये प्रशिक्षणकेन्द्रे गत्वा तत्रत्येभ्यःकुशलचिकित्सकेभ्यः विशेषेण सा पञ्चकर्मपद्धतिः शिक्षिता या सर्वाऽपि महामयूखनामके षोडशे मयूखे मूर्त्तिमतीव दृश्यते यद्दर्शनेन पञ्चकर्म-सरणिः सरला स्यात् तत्कर्मप्रवृत्तानां भिषजामिति।

प्रायो वैद्याः वैदिका दार्शनिका वैयाकरणा ज्योतिषिकाश्च शुष्कहृदया भवन्ति परन्तु सोऽस्मदीयोऽयं जगदीशाचार्यः सरस हृदयोऽस्ति यश्चिकित्साकर्मकुर्वन्नपि सरस-साहित्यरचनाव्यसनी वर्त्तते तथापि नाऽयं व्यसनी यथाऽन्ये कवयः श्रूयन्ते दृश्यन्ते च।

अलमति विस्तेरण तथापि श्री लोलिम्बराजोक्त्या त्वेनमवश्यमभिनन्दयामि यथा।

> गुरोरधीताऽखिलवैद्यविद्यः
> पीयूषपाणिः कुशलः क्रियासु।
> गतस्पृहो धैर्यधरः कृपालुः
> शुद्धोऽधिकारी भिषगीदृशः स्यात्।

वस्तुत ईदृश एवाऽऽयुष्मान् भिषग् य आचार्योऽपि विद्यार्थीति नामधरः।
तस्यैतस्य सफलतां कामयमानः—

लालचन्द्रो वैद्यः
( झांसी विश्वविद्यालयस्थः )
ता० १६-२-६६ ई०

# समर्पणम्

पूज्यपादगुरुवर्याः
स्वर्गीयाः श्री पं० लालचन्द्रवैद्याः

आयुर्वेदामृतनिधिमयं गाहमानो मनीषी ।
तेजोमूर्त्तिर्मधुरवचनो गौरगात्रस्तपस्वी ।।
शान्त्यागारः सरलहृदयो यश्च सौम्म्याकृतिर्वै ।
वन्दे मुख्यं गुरुमिममहञ्छास्त्रमुत्सृज्य चास्मै ।।

—तच्चरणरेणुः जगदीशः

पेंशनाख्या च मे माता
या च साध्वी तपस्विनी ।
तन्नाम्नेदं कृतं भाष्यं
संशयोच्छेद्यविस्तरम् ।। १

राजकार्यादवकाशं
प्राप्तवाञ्जननीमहः ।
तस्या जन्मदिने तस्मात्-
पेंशनं नाम कीर्तितम् ।। २

—तदृणीपुत्रः जगदीशः
(चिकित्साधिकारी)

ग्रन्थकर्तुः माता
स्वर्गीया श्रीमती
पेंशनदेवी

# प्रणेता

जगदीशाचार्य:

अस्य षट्कर्मशास्त्रस्य प्रकाशने हर्षविषादावुभावपि द्वन्द्वरूपेणावस्थितौ वर्तेते मे हृदि । हर्षस्य विषयोऽयं यद्वैद्यानां कृते आतुरोपकाराय परमोपयोगिशास्त्रमिदं प्रकाश्यते येन गुरुवर्याणामृणेभ्यो मुक्तोऽहं तथा च स्वीयमातुर्नाम चामरं कृतं तन्नाम्ना पेंशनभाष्येणेति । परमविषादस्य च विषयोऽयं यन्मातृगुर्वोरुभयोरपि मध्ये केनापि शास्त्रमेतत्प्रकाशितं न दृष्टम् । १९६७ ईस्वीयेऽब्दे प्रात:स्मरणीयच्छी पं० लालचन्द्र वैद्या: गुरुवर्या: स्वर्गयात्रां कृतवन्तो मामनाथीकृत्य । ६ जून १९७० ईस्वीये प्रात:स्मरणीयया मात्राऽपि स्वर्गयात्रा कृता । अतएव हर्षविषादयोरुभयोरपि प्रभावप्रभावितेन हृदयेनाहं प्रात:स्मरणीयमुभयमपि देवं संस्मरन् स्वजीवनसङ्गिनीमर्द्धाङ्गिनीमनसूयां श्रीमतीं गायत्रीदेवीं प्रशंसामि, धन्यवादांश्च बहून् ददामि तस्यै, यया शास्त्रमेतत्प्रकाश्य समुपकृतोऽहमित्यलम् ।

विद्वच्चरणरेणु:<br>
जगदीश:<br>
२४-१-७१

अत्यन्तमहत्वपूर्णमिदं
शास्त्रं प्रकाश्य
किञ्चित्कृतत्याऽस्मि

—गायत्रीदेवी

प्रकाशिका

**श्रीमती गायत्रीदेवी**

# अथाध्यायानुक्रमणिका

विषयाः　　पृष्ठ



॥ इति ॥

## ओ३म्

# अथ प्रथमो मयूखः

### अथ षट्कर्मानुशासनम् १

अथेत्ययं शब्दोऽधिकारार्थः प्रयुज्यते। षट्कर्मानुशासनं नाम शास्त्रमधिकृतं वेदितव्यम्। षण्णां कर्मणामनुशासनं यस्मिञ्छास्त्रे तत् षट्कर्मानुशासनं नाम शास्त्रम्।

### वमनविरेचनानुवासननिरूहणनस्यानि पञ्चकर्मण्येव चिकित्सोपक्रमा इत्येके २

तत्र पञ्चैव कर्माणि चिकित्सोपक्रमा इत्येक आचार्याः। कानि च तानीत्याकांक्षायामुच्यते। वमनं विरेचनमनुवासनं निरुहणं नस्यमिति पञ्चकर्माणि। तत्र वमति येन कर्मणा तद्वमनं, विरिच्यते येन कर्मणा तद्विरेचनम्। अनुवास्यते स्नेहो येन कर्मणा शरीरे रौक्ष्यादि-निवृत्यर्थं तदनुवासनम्। निरुह्यते शरीरं येन कर्मणा तन्निरुहणम्। नासिकयोषध-दान-कर्म नस्यमुच्यते। एतान्येव पञ्च कर्माणि चिकित्सोपक्रमा इत्येकेषामाचार्याणां मतम्। ननु चतुष्प्रकारा संशुद्धिरिति वचनादनुवासनस्य बृंहणत्वादशोधनत्वात्कथं पञ्चकर्मसु गणना? इति चेन्न। पेयादि-बृंहणमिवानुवासनमपिनिरूढरूक्षकोष्ठे दीयतेऽनिल-हननायावृद्धये च। शोधनत्वाऽभावेऽपि न कर्मत्वहानिः। तस्मादेव पञ्चकर्माणीत्येवोपदिष्टानि सन्ति न तु पञ्चशोधनानीति। अथवाऽनुवासनमपि प्रत्यागच्छद्दोषान् निर्हरत्येव। निर्ह्रियन्ते दोषा अनेनेति व्याख्यात्वसाम्प्रतं निरूहशब्दस्य-रुह्धातुबीजत्वात्।

### निर्हरणान्निरूह इति चिन्त्यम् ३

तत्र निरूहशब्दस्य व्याख्यायामुच्यते, दोषनिर्हरणाच्छरीररोगहरणाद्वा निरूह इति व्याख्या चिन्त्या। असाम्प्रतमेवेति वा। किं कारणम्? रुह्धातुबीजत्वात् रुह्धातुरेवात्रबीजं, तस्योपचयार्थे प्रयोगो भवति।

तस्माच्छरीररोहणादेव निरूह इति वक्तव्यम् । शरीरं निरूह्यते वर्द्धयते येनेति । तदेवास्थापनमुच्यते, वयः स्थापनादिति । तत्र रुहधातोर्ल्युङि दीर्घे च सिद्धयति । निश्चयेन रोहणं शरीरस्य येन कर्मणा तन्निरूहणमित्यर्थः। नि+रूह्+ ल्युङ् ङित्वाद्गुणे निषिद्धे तथा च दीर्घे सिद्धिः । निरूपसर्गादूह-वितर्कार्थाद्धातोर्वा ल्युटि प्रत्यये च सिद्धिः । निरन्तरमूह्यन्ते वितर्क्यन्ते नानौषधयो योजनार्थं यस्मिन्कर्मणि तन्निरूहणमिति चापि साधुः । निरुपसर्गाद् वह्धातोर्वा ल्युटि प्रत्ययेऽपि निरन्तरं वहत्यूर्ध्वं द्रवं येन कर्मणा तन्निरूहणमिति वा वक्तव्यम् । सम्प्रसारणे दीर्घे च सिद्धिः ।

तस्मात्सादोषनिर्हरणाच्छरीररोगहरणाद्वेति सुश्रुतव्याख्या तु चिन्त्यैव । हृधातोः सर्वथा सिद्धयशक्यत्वात् । अथवा नैतच्छास्त्रं शब्दशास्त्रं नवैतत्सूत्रं निरूहणशब्दस्य व्युत्पत्तिप्रदर्शकं व्याकरणदृष्टया, अपि तु शोधनचिकित्साधि-करणे दोषनिर्हरणप्रकरणवशात्केवलमभिप्रायसूचकमेवेदमार्षवचनं यदेतदपि निरूहणकर्म दोषनिर्हरणाच्छरीररोग-हरणाद्वा क्रियते, गण्यते च पञ्चकर्मसु । तथैव चरकादिवचनान्यपि ज्ञेयानि । तथाच प्रकृतिप्रत्ययकल्पनया व्युत्पत्ति स्तु व्याकरणदृष्टया पूर्वोक्तप्रकारेण पृथक् ।

## उभावपि निर्हरणनिरूहौ लाघवत्वान्निरूह एव वा ४

उभावपि शब्दौ वा प्रयोक्तव्यौ । निर्हरणंनिरूहणञ्चेति । शोधन-बृंहणोभयकार्यकरत्वात् । सन्ति च वस्तयो ये दोषान्निर्हरन्ति, सन्ति च वस्तयो ये शरीरधातून् रोहयन्ति वर्द्धयन्ति पुष्णन्ति चेति । तत्र दोष निर्हरणाच्छरीरे रोगहरणाद्वा निर्हरणः, शरीररोहणान्निरूहः इतिव्याख्येयौ । अर्थात् शोधनार्थं निर्हरणमेव, बलार्थं निरूहणमेव ब्रूयात् । अथवा लाघवार्थं निरूह एव प्रयुज्यते । निर्हरणत्वस्य वमनादिसर्वकर्मणां सामान्यधर्मत्वान्नि-रूहशब्द एव विशेषेण प्रयुज्यते वस्त्यर्थे । शारीरधातुरोहण-रूपक्रिया-वैशिष्टयात् ।

## तत्र, वमन-विरेचन-वस्ति-नस्य-रक्तमोक्षणानीत्येकेऽनुवासन-निरूहणयोरेककर्मत्वात् ५

तन्नेत्यन्ये । पक्षान्तर उपस्थाप्यतेऽत्र, वमनं विरेचनं वस्तिर्नस्यं रक्तमोक्षणमिति पञ्चकर्माणीत्यन्ये प्रति पादयन्त्याचार्या इति । कश्चात्र हेतुरित्युच्यते । एककर्मत्वादनुवासन-निरुहणयोरुभयोः कर्मणोरिति । यच्च कर्म यश्च विधिरनुवासने तदेव कर्म स एव विधिर्निरूहणे क्रियते । तस्मान्न तयोः पृथग्गणना कार्येति । समानकर्मसाध्यत्त्वात्समानसाधन-साध्यत्वाच्चोभयोरेककर्मत्वमेवोचितमनुवासननिरूहणयोर्वस्तिसंज्ञकमिति ।

## नेत्यपरे शल्यकर्मत्वाद्रक्तमोक्षणस्य ६

तत्रापरे पूर्वमतप्रतिपादका आचार्याः कथयन्ति नेति । किं कारणम् ? शल्यकर्म एव तद्रक्तमोक्षणं नाम कर्म । छेदनभेदनलेखनप्रच्छानाचूषण-कर्मसाध्यत्वात् । धान्वन्तरसम्प्रदाये विशेषप्रसिद्धत्वाच्च विस्रावणस्य शल्य-कर्मत्वस्य । तद्यथा सुश्रुतसूत्रस्थाने पञ्चमेऽध्यायेऽपि पञ्चमे सूत्रे सप्तमं कर्मेति स्वीकृतम् ।

## प्रदुष्टदोषनिर्हरणार्थत्वात्तेषां दोषत्वाभावाच्चरक्तस्य ७

द्वितीयोऽपि हेतुरुपस्थाप्यते । यत्पञ्चकर्माणि तु प्रभूत-दुष्टदोषाणां वातपित्तकफाणांशोधन निर्हरणार्थं क्रियन्ते । न च रक्त दोषः । अपि तु धातुः सप्तस्वेकः । तदर्थत्वाच्च रक्तस्य दोषत्वाभावाच्च न रक्तमोक्षणं पञ्चकर्मसु समन्वितु शक्यमिति । अथ किमिदं तदर्थत्वाच्चेति । उच्यते तेषां वातपित्तकफाणामेव निर्हरणार्थत्वादिति ।

## पञ्चकर्मीयसिद्धौ ग्रहणाभावाच्च महर्षिणा ८

तृतीयोऽपिहेतुरत्र । महर्षिणा चरकाचार्येण सिद्धिस्थाने पञ्चकर्म-योग्यायोग्यविचारसमये रक्तविस्राव्याविस्राव्याणां ग्रहणं न कृतम् । स्याच्चेद्रक्तविस्रावणमपि पञ्चकर्मसु कर्मैकं किन्न तदयोग्ययोग्याणामपि निर्देशः स्यात् ? ज्ञायते चैतेन न शोणितमोक्षणं शक्यं पञ्चकर्मसु गृहीतुम् । तत्र ग्रहणाभावात् ।

## अपामार्गतण्डुलीयाध्यायेऽपि ग्रहणाभावात् ९

चतुर्थोऽपि हेतुः । अपामार्गतण्डुलीयाध्याये ग्रहणं न कृतं तस्य, वमन-विरेचनानुवासननिरूहणनस्ययोग्यौषधनिर्देशएवकृतः न जलौकादिसाधननिर्देशो, नाम वारक्तमोक्षणस्य तेषु कर्मस्विति ।

## सुश्रुतेनापि क्वाप्यग्रहणात् १०

पञ्चमोऽपि हेतुरन्तिमः । शोणित-मोक्षणस्य विशदविवेचनेवमना-दीनामुपदेश-समयेऽपि कुत्रापि सम्पूर्ण महाग्रन्थे नोक्तं मुक्त कण्ठेन यदिदं रक्तमोक्षणं कर्म पञ्चकर्मस्वेकमिति । तस्माद्वमनविरेचनानुवासननिरूहण-नस्यान्येव पञ्चकर्माणि पञ्चकर्मसु समन्वितुं शक्यानि नेतराणि ।

## स्नेहनस्वेदनविरेचनवस्तिविस्रावणानि वा ११

अथ मतान्तरमुपस्थाप्यते तृतीयम् ! स्नेहन स्वेदन विरेचनवस्तिविस्रावणान्येव पञ्चकर्माणि साधूनि । वस्तिरेकं कर्म तेनानुवासन निरूहणयोः सिद्धिः । विरेचनमप्येकं कर्म तत्रैव वमन नस्ययोर्ग्रहणम् । वमनस्योर्ध्वविरेचनत्वात् कल्पस्थानोक्तत्त्वाच्च । नस्यं तु शिरोविरेचनमुक्तमेवसर्वत्र । तस्मात् सर्वाणि पञ्चकर्माणि वमनादीनि, द्वे कर्मणी विरेचनं वस्तिरिति । स्नेहोऽपि वातं निहन्ति । स्वेदनमपिवातश्लेष्महरम् । तथा च रक्त विस्रावणेनापि त्रिदोषनिर्हरणं भवति । तस्मात्स्नेहनं स्वेदनं विरेचनं वस्तिः शोणित-विस्रावणमित्येव पञ्चकर्माणि ।

## नेति पूर्वाचार्याः पूर्वकर्मत्वादाद्ययोः प्रतिकर्म-निर्दिष्टत्वाच्च १२

तन्नेति पूर्वमतप्रतिपादकाः । किं कारणम् ? उच्यते, आद्ययोः स्नेहनस्वेदनयोः पूर्वकर्मत्वात् । कथम् ? त्रिविधं कर्म भवति । पूर्वकर्म, प्रधानकर्म, पश्चात्कर्मेति । सन्ति वै कर्माणि यैर्विना न सिद्धयन्ति प्रधानकर्माणि सम्यक्कृतान्यपि । तद्यथा न तृणादिभिरसत्कृताः गावो दोग्धुं शक्याः । कृतेऽपि दोहने न दुग्धागमः । सन्ति वै पश्चात्कर्माणि येषु पश्चादकृतेष्वपि सुकृतान्यपि तान्येव प्रधान-कर्माणि भवन्त्यफलानि । तद्यथा सम्यग्धौतान्यपि शाट्यादीनि वस्त्राणि विमलीकृतानि भास्करप्रकाशासंस्कृतानि न भवन्ति भास्वराणि विवर्णायन्ते च । तथैवेहापि चरम स्रोतःसु प्रभूतप्रदुष्टनिवद्धदोषसंघाताः न वमनादिभिर्निर्हर्तुं शक्याः विना कोष्ठागमनेन । न दोषाणां तादृशाणां कोष्ठागमनमन्तरेण स्नेहस्वेदनाभ्यां शक्यम् । तस्मात्पूर्वकर्मण्येव स्नेहस्वेदने, न प्रधानकर्मणी । नान्यथा कर्म कर्म प्रति तयोः पूर्वोपक्रमोपदेशः स्यात् । तस्मात्प्रतिकर्म च पूर्व निर्देशत्वात्तयोः पूर्वकर्मत्वं सिद्धमेव । विस्रावणं तु परिहृतमेव ।

## षट्कर्माणि वा लोकश्रुतेः १३

अथवा षट्कर्माणीति मन्तव्यम् । लोकश्रुतेः । श्रूयते हि लोके सदा प्रयुक्तः षट्-कर्म नामरूढ़िः । स च रूढ़िर्महाव्यापार साध्ये महाप्रयाससाध्ये च कर्मणि प्रयुज्यते मूर्खैरपि । भोः षट्कर्माणि चात्र दृश्यन्ते कर्मण्यस्मिन्निति । न चान्तरेण षट्कर्मभ्यः साध्यमिदं कर्मेति । कानि च तानि षट्कर्माणीति प्रश्ने कृते यद्यपि नाद्यत्वे कोऽपि प्रयोक्तोत्तरयति कानि तानि कर्माणि षडिति । उत्तरयति च प्रत्येको लोको यत् षट्कर्मेत्यस्य महाव्यापारप्रयासो बहुव्यापारप्रयासश्चैवार्थ इति किन्तु विचार्यञ्चास्माभिरत्र । न कापि संज्ञाऽनन्वर्था भवति, न कोऽपि रुढ़िरनन्वर्थो भवति। अस्त्यवश्यमेवात्र

कश्चिदर्थानुवन्धः । यद्यपि नाद्यत्वे लोकैर्ज्ञायिते तदनुवद्धार्थो येनं कालान्तरेण रूढ़िरयं शब्दः षट्कर्म नाम जातो महावहुव्यापार-प्रयासार्थे । परिभाषेव रूढिरपि स यः स्वांशे चरितार्थः फलमन्यत्र । तत्र वहुव्यापारार्थे महा-व्यापारार्थे चायं चरितार्थः किन्तु फलन्तु चिकित्साक्षेत्रे । यल्लंघनदीपन-पाचनैरसाध्ये रोगे प्रारभ्यते स्म चायं वहुव्यापारप्रयासो महादुष्करव्यापारः षट्कर्मणां वमन-विरेचननस्यानुवासन-निरूहणविस्रावणानाम् । अतएव महादुष्कर साध्यत्वार्थे शनैः शनैः प्रयुज्यमानमिदं षट्कर्म नाम नामरूढ़ि-र्भूतम् । विस्मृतञ्च लोकैर्मूलम् । तस्मात् षट्कर्माणीत्येव व वक्तव्यानि । लोकश्रुतेर्वलवत्तरत्वात् । विस्रावणं खल्वपि शृंगालावुजलौकाप्रच्छानसिरा-वेधैर्वति-कफ-पित्त-त्रिदोषर्निहरणत्वात्कर्मैवैकं षष्ठम् ।

## षड्यन्त्रवत् १४

तद्यथा कुचक्रेऽर्थे दुष्टैः कृते, राजभी राजानं प्रति वा कृते, षड्यन्त्रत्व-प्रसिद्धिः । कानि च तानि नाद्यत्वे ज्ञायन्ते । तत्तु रानीतिज्ञैरेव विचार्यम् मया तु षटकर्म-शब्दः केशैर्गृहीत इति ।

इति श्रीजगदीशाचार्य-विरचिते षट्कर्मशास्त्रे प्रथमो मयूखः

# अथ द्वितीयो मयूखः

## त्रिविधा हि दोषापत्तयोऽल्पमध्यप्रभूताः १

तत्र त्रिविधा एव दोषाणामापत्तयोभवन्ति । काश्च ताः ? अल्पदोषापत्तिः । मध्यदोषापत्तिः । प्रभूतदोषापत्तिरिति । यथा हि दोषाणांः प्रकोपोऽल्पः स्यात्तदाल्पदोषापत्तिरित्युच्यते । मध्यश्चेत्प्रकोपो मध्यदोषापत्तिः । प्रभूत-दोषप्रकोपश्चेत् प्रभूतदोषापत्तिरित्यभिधीयते ।

## प्रथमायां लंघनम् २

तत्र सत्याञ्चाल्पदोषापत्तौ लंघनमेव पर्याप्तम् । अपतर्पणातर्पणाभ्या-म्बुभुक्षितजठराग्निः पूर्वं दोषानेव पचति भस्मसात्कुरुते च । समर्थश्च भवति पुरुषस्यान्तरग्निरल्पदोषान् भस्मीकर्तुम् ।

## द्वितीयायां दीपनपाचने शमनञ्च ३

द्वितीयायां खलु मध्यदोषापत्तौ जातायां लंघनासाध्यायां तु दीपनं पाचनं शमनञ्चौषध साहाय्यमावश्यकम् । यतो हि दोषप्राबल्यान्नान्तराग्निः समर्थो भवति भस्मीकर्तुम् । यत्रकिञ्चित्तु दोषाणामुच्छेदविघटने स्यातां किञ्चिच्च जठराग्नेः परिवर्धनं स्यात् तत्र दीयते चौषधं येनाग्निर्वर्धते । दीयते चौषधं येन दोषाणामुच्छेद विघटने भवतः । तं चोच्छिन्नविघटितं दोषं परिवर्धिताग्निर्भस्मीकर्तुं समर्थोभवति तथा च शमनौषधं शमयति दोषं प्रभावञ्चेति ।

## ताभ्यामसाध्ये प्रभूते कर्माणि ४

द्वाभ्यां विधिभ्यामसाध्ये प्रभूत-दोषे प्रभूतायां दोषापत्तौ, तानि पूर्वोक्त कर्माणि क्रियन्तेऽनन्यमार्गत्वात् ।

## अत्यन्तस्रोतोऽवरोधोच्छेदकत्वसामर्थ्यात् ५

यतो हि कर्माणि वमनादीनि दोषान् समूलान् चरमस्रोतोभ्योऽप्युच्छेदयन्ति । निर्हरणशोधनाभ्यामुच्छेदकत्व-सामर्थ्यादिति ।

## खवैगण्येन स्रोतोऽवरोधः ६

स च स्रोतोऽवरोधः खवैगुण्येनैव जायते । किञ्च शरीरे खमित्यग्रे वर्णयिष्यते ।

## उपलक्षणमात्रमेव निर्विकारत्वात् खस्य सौक्ष्म्यात् ७

अथवा खवैगुण्यमित्यत्र खमित्युपलक्षणमात्रमेव भवति । किं कारणम् ? निर्विकारत्वात् । यतः खमाकाशो निर्विकारो भवति । कैः ? अन्यैर्भूतैः पृथिव्यादिभिः । किं कारणमित्युच्यते । सौक्ष्म्यात् । सूक्ष्मं हि खं सर्वेभ्योऽन्येभ्यः । तत्र न स्थूलानां गुणानां विकृतीनां वा सूक्ष्मतरे प्रवेशः । खं हि सर्वं भूतेभ्यः सूक्ष्मतरम् । तस्मान्निर्विकार एव सदा तिष्ठति ।

## खपरमाणुद्वयमध्यवर्ति-चतुर्भूत-परमाणुवैगुण्यात् ८

यतो हि पृथिव्यादि-स्थूल-चतुर्भूत-परमाणु-परिवेष्टकाकाशपरमाणुद्वयमध्यवर्तिचतुर्भूतपरमाणुक्रमवैगुण्यमेव जायते नतु खपरमाणुषु, तस्मादुपलक्षणमात्रमेव खवैगुण्यम् । स्रोतसां स्वधर्मकर्मवैगुण्यं खवैगुण्यमिति तात्पर्यार्थः ।

## शरीरसमवेतापरचतुर्भूतपरमाणुद्वयमध्य-वर्त्यन्तराकाशाश्चरमस्रोतांसि ९

ते च प्राणिशरीरेषु समवेतपृथिव्यादिस्थूल-चतुर्भूतपरमाण्वोर्द्वयोर्मध्य-वर्त्यन्तराकाशाश्चरमस्रोतांसि सन्ति। तेषामेवावरोध उपचयापचयाभ्या-मन्यभूतपरमाणुद्वयमध्यगत-स्रोतोवरोधः खावरोधो वोच्यते।

## तानि परमाणुदर्शने विशेषेण १०

तानि खलु चरमस्रोतांसि प्रकरण-वशाद्विशेषेण परमाणुदर्शन उक्ता-न्येव। नात्र तद्विस्तरावश्यकतेति।

## शेषाणि विस्पष्टान्यायुर्वेदमहासंहितासु केशिकादीनि ११

शेषाणि स्रोतांसि तु विशेषेणायुर्वेदीयचरकादि-महासंहितासु विस्पष्टा-न्येव। न तेषां तत्र दर्शने विचारः। केशिकादीनि च तानि महास्रोतो-ऽन्तानि स्रोतांसि भेद-प्रभेदैरिति।

## केशिकासिराधमनीलसीकारस-शुक्रस्वेदपित्त-मूत्रश्वासवाहिप्रभृतीनि मध्यस्रोतांसि १२

तत्रमध्यस्रोतसां किञ्चिन्निर्देशः क्रियते। याश्चकेशिकाः सिराश्च याः धमन्यश्च याः लसीका-वाहिन्यो रसवाहिन्यः शुक्रवाहिन्यः स्वेदवाहिन्यः पित्तवाहिन्यो मूत्रवाहिन्यः श्वासवाहिन्यश्च याः स्थूल-सूक्ष्मतर-प्रणाल्यस्ताः मध्यस्रोतांसि कथ्यन्ते।

## ओष्ठाभ्यां गुदपर्यन्तं महास्रोतस्तदेकमेव १३

महास्रोतस्तु सर्वेषामेकमेव भवति योऽन्नमार्गः। ओष्ठाभ्यां गुदपर्यन्तं तदेकमेव भवति।

## तत्तु सप्तधा विभक्तम् १४

तत्तु महास्रोतः सदप्येकं सप्तधा विभक्तं क्रियागुणात्। तद्यथास्यम्, अन्ननलिका, आमाशयः, ग्रहणी, उभयान्त्रम्, मलाशयः, गुदञ्चेति ग्रहण-निगरणादिक्रिया-गुणैरिति।

## श्वासवाह्यपि १५

श्वासवाहिस्रोतोऽपि सप्तधा विभक्तम् । तद्यथा नासा, आस्यं, स्वर-यन्त्रं, महाश्वासप्रणाली-श्वास-प्रणाल्यौ, श्वास-मन्दिराणि, श्वासकोष्ठानि-चेति । तत्र श्वासकोष्ठेष्वेव फुफ्फुसयोरभ्यन्तरे प्राणोदानयोः प्रवेशनिः-सरणाभ्यां रक्तशुद्धिर्जायते जीवनयात्रा च ।

## मूत्रवाह्यपि तथैव १६

तथैव मूत्रवाहिस्रोतोऽपि सप्तधा । मूत्रपोनकं, मूत्रकुल्या, मूत्रकोष्ठानि मूत्रगवीन्यौ मूत्राशयः शिश्नं, शिश्नवेष्ठनञ्चेति । तत्रवृक्कयोर्मूत्रपोनकेषु रक्तान्मूत्रं प्रस्रवत्यजस्रम् ।

## शुक्रवाह्यपि च १७

तथैव च शुक्रवाहि स्रोतोऽपि सप्तधाविभक्तम् तद्यथा शुक्रपोनकं, शुक्रकुल्या, शुक्रकोष्ठं, शुक्रप्रणाली, शुक्राशयाष्ठीला शिश्नञ्चेति । स्त्रीषु योनिकलावेति । शुक्राशयाभावश्च ।

## तथैवान्यस्रोतांसि १८

तथैव पूर्ववदेवान्य-स्रोतांस्यपि प्रविभज्य ज्ञेयानि वुधैः ।

## धातुकोषच्छिद्रं चरमस्रोत इत्याधुनिकाः १९

तत्र सप्तधातूनां ये कोषाः खण्डा स्तेषां प्रतिकोषं यच्छिद्रमेकमेकं तदेव चरमस्रोत इत्याधुनिकानां मतम् ।

## तन्न त्रसरेणुपर्यन्तं मध्यावधित्वात् २०

तन्न समीचीनं मतम् । किं कारणम् ? उच्यते, यत्त्रसरेणु-पर्यन्ततु मध्यस्रोतांस्येवाभिधीयन्ते । भवन्ति च प्रतिकोषमसंख्य-त्रसरेणवो बद्धाः । तस्मान्न तानि चरमस्रोतांसि । अथवा यदा तु त्रसरेणुद्वयमध्य-वर्त्याकाशोऽपि न चरमस्रोतस्तदा धातुकोषच्छिद्राणां का वार्ता ? मध्यस्रोतां-स्येव तानि ।

## अपरभूतत्रसरेण्वपचयोपचयः खवैगुण्यम् २१

पृथिव्यादि-चतुर्भूतानां ये त्रसरेणवस्तेषांचयापचयाभ्यामेव स्रोतोरूप-परिवर्तनात्खवैगुण्यमुच्यते । तत्रैव ।

## धातुकोषगतत्रणुकादिषु प्रकोपादवरोधः २२

सप्तधातु समवेतत्र्यणुकादिषु वातपित्तकफ-प्रकोपादेव तत्र संगादेक-देशीयवृद्धया तदन्तराकाशमार्गाऽवरोधः ।

## आहारविहारातियोगप्रवृद्धदोषोपचयो वृद्धिः २३

तत्र मिथ्याहारविहारैरतियोगैश्च प्रकर्षेण वृद्धिमागतानां दोषाणां क्वचिदत्युपचयो वृद्धिरित्युच्यते ।

## वृद्धयतिशयेन स्रोतोऽवरोधः २४

सा च वृद्धिः शनैः शनैरुपचयातिशयेन तानेवान्तराकाशान् सम्यक् परिपूरयति । न तदा पोषणतत्वानि पोषयन्ति धातून् मार्गाऽवरोधेन गत्यभावात् ।

## एकदेशीयवृद्धिक्षयौ लंघन-साध्यौ २५

तदैवैकदेशीयवृद्धिरन्यत्र च पोषणाभावादेकदेशीयक्षयः । तत्रैव चेल्लङ्घनं क्रियते तदा साध्यौ । अल्पदोषापत्तित्वात् ।

## ततः प्रकोपः २६

तत एकदेशीयवृद्धिक्षयानन्तरमेकत्रितदोषाणां प्रकोपः क्वथनादिकं जायते ।

## ततः प्रसरः २७

तत्पश्चात्परितः प्रसारो भवति शरीरोष्मणा ।

## ततश्चंक्रमणं रक्तेन रसेन वा २८

ततस्तेषांदोषाणां रक्तपरिभ्रमणवशाद्रक्तेन रक्तगतरसेन वाखिलशरीरे चंक्रमणं भवति ।

## ततः स्थानसंश्रयः पूर्वरुपोत्पत्तिश्च २९

तदनन्तरं चंक्रम्यमाणस्य प्रदुष्टदोषस्य यत्रस्थाने धातौवाङ्गे वा स्थितिरधिष्ठानं वा भवति स एव हि स्थानसंश्रय इत्युच्यते । तत एव रोगाणां पूर्वरूपाणि भाविनामुत्पद्यन्ते । तदेवाधिष्ठानाश्रयत्त्वं रोगबीजम् ।

ततः काले व्यक्तिर्बधितस्य रूपाणि च ३०

ततः शनैः शनैर्बधितस्य तस्याधिष्ठितस्य रोगबीजस्योचित-काले व्यक्तिर्जायते। तेन रूपाणि जायन्ते।

इति सम्प्राप्तिरुक्ताऽऽव्यक्तेः ३१

इति रोगरूपव्यक्तिपर्यन्तमेव रोगसम्प्राप्तिरुक्ता वेदितव्या। अर्थात् रोग-प्राप्तौ कारणीभूताऽऽभ्यन्तरा शृङ्खलावद्धा विकृतिरिति। तस्या एव सम्प्राप्तित्त्वात्।

ततो भेदो विशेषलक्षणानि चेतिमध्या ३२

तदनन्तरं रोगाणां भेदो जायते विशेषलक्षणानि च। इत्येतावत्पर्यन्तं मध्यदोषापत्तिः। दीपन-पाचन-शमनैरेव साध्या च।

उपेक्षितेऽसाध्ये शोधनमेव ३३

तत्र चेदुपेक्षितो रोगस्तदा दीपनाद्यैरसाध्ये शोधनमेव शरणमेकम्।

तदर्थ एव कर्मणामुपक्रमः ३४

दीपन-पाचन-शमनैरसाध्य-साधनार्थमेव वमनादीनामुपक्रमः।

इति श्रीजगदीशाचार्य-विरचिते षट्कर्मशास्त्रे द्वितीयो मयूखः

# अथ तृतीयो मयूखः

### वमननस्याभ्यां कफस्य १

तत्र वमनेन नस्येन च प्रदुष्टस्य कफदोषस्य निर्हरणं क्रियते।

### विरेचनेन पित्तस्य २

विरेचनकर्मणा तु पित्तस्य निर्हरणं क्रियते।

### निरूहणानुवासनाभ्यां वातस्य ३

निरूहण-कर्मणा, अनुवासनकर्मणा च प्रदुष्टस्य महादोषस्य वातस्य निर्हरणं क्रियते। ननु किमिदं महादोषस्येति? उच्यते, दोषेषुमहानयं वातो यतस्ततो महादोष इत्युक्तः। कुतः? बहुदोषकरत्वादिति। कफस्य विंशतिरोगाः। पित्तस्यापि चत्वारिंशद्रोगाः किन्तु वातस्याशीति रोगाः परिगणिताः। यतो हि कफपित्ताभ्यामुभाभ्यां कृतरोगयोगादप्यधिकरोग-करस्तस्मान्महादोषो वातोऽयम् इति।

### आमाशयादि सर्वं कफस्थानं नाभेरुपरिष्टात् ४

तत्र नाभेरुपरिष्टादामाशयादीनि देहाङ्गानि कफस्यैवाधिष्ठानानि प्राधान्येन। स एव कफ आस्यत आमाशयपर्यन्तंगृहीतमाहारं क्लेदयति संश्लेषयति च।

### ग्रहणी पित्तस्य ५

ग्रहणी तु पित्तस्याधिष्ठानम्। तत्रैव शनैः शनैः सरत्याहारे पित्तयोगो जायते। तदैव पित्तं स्वतैक्ष्ण्यादाहारसंघातं काष्ठान् कुठार इवाशु बहुधा-भिनत्ति छिनत्ति द्व्यणुकत्र्यणुकादिषु भागेषु नान्यथाहार-समवेतशरीरधातु-पोषकतत्वानामन्त्रयोराचूषणं स्यादिति। तदेव पित्तकार्यं पाचनमुच्यते। तदेव पित्तमुच्यते यच्च पित्ताशयादागच्छति ग्रहण्याम्। यच्चाग्न्याशयादपि तीक्ष्णरसद्रव्यमागच्छति। पीतवर्णत्वाच्च तौ रसौ पित्तमुच्येते। न च

तत्राग्न्याशये चुल्यामिवाग्निः प्रज्वलति । अपित्वग्निवत्कार्यकरण
त्तस्योष्णप्रभावत्वाच्चैवाऽग्निरन्तराग्निर्वोच्यते । तदाशयोऽप्यामाशयादध
स्थत्त्वादग्न्याशय इत्युच्यते । यथा च स्थाल्या अध एव चुल्ली साग्निर्भवति
तथात्वेनैवोपमया कृतं नामकरणं महर्षिभिः । न तु तत्र साक्षादग्निः प्रज्व
लति हव्यवाहनीभूतः । न वा महर्षीणामयमाशय आसीन्नामकरणे
इत्थमेव, तेषामाशय इति ज्ञापयन्त आधुनिका विचारमूढा, हीना एवेति
न स्याच्चेत्पित्तं शरीरे, नौष्ण्यं स्यान्न च तापो न च जीवनमिति ।

## क्षुद्रान्त्रमपि ६

क्षुद्रान्त्रमपि खलु पित्तस्थानं भवति । यतो हि ग्रहण्यां पित्तमाहारेण
सह संयुज्य त्वरितमेव क्षुद्रान्त्रं गच्छति । तत्रैवाहारे पित्तस्य प्रमुख-कार्य
पाकादि भवति ।

## उभयान्त्रमलाशयाः वातस्थानानि नाभेरधस्तात् ७

अन्त्रञ्चोभयं मलाशयश्च वातस्य स्थानानि । नाभेरधस्तैरेव चोत्तरोत्तर
माहारसरणं मलस्य चानुलोमनं भवति । अतएव वमननस्याभ्यां हि कफस्य
विरेचनेन पित्तस्याधोमार्गोन्मुखत्वाद्वातस्य च निरूहणानुवासनाभ्यामेव
निर्हरणं भवति ।

## सर्वकर्मभिः सर्वदोषाणां वा निर्हरणम् ८

अथवा सर्वैरपि कर्मभिः सर्वेषामपि दोषाणां वातपित्तकफानां निर्हरण
भवति ।

## सत्यपि प्राधान्ये सर्वत्र सर्वदोष स्थितिः ९

यतो हि सत्यपि स्वस्वाधिष्ठानेषु तत्तत् प्राधान्येऽन्यदोषाणामपि तत्र
तत्र स्थितिः ।

## सन्निकृष्टाध्वनैव निर्गमनप्रवृत्तेः १०

यश्च सन्निकृष्टोऽध्वा तेनैव निर्गमनस्य प्रवृत्तिदर्शनात् । अतएव
नाभेरूर्ध्वाङ्गानां वात-पित्तयोरपि वमनेननस्येन च निर्गमनम् । नाभिमण्डल
स्थानां वातकफयोर्विरेचनेनैव । तथैव च, अन्त्रयोरधोऽङ्गानाञ्च कफ
पित्तयोरपि निरूहणानुवासनाभ्यामेव निर्हरणंभवति ।

कोष्ठागतानामेव च तत् कर्मभिः ११

तत्र वातपित्तकफानां तन्निर्हरणं भवति कर्मभिः, वमनादिभिरिति। किन्तु कोष्ठागतानामेव।

आकोष्ठादेव प्रभावात् १२

यतो हि कोष्ठपर्यन्तमेव वमनादि-कर्मणां प्रभावः। यथा च वमनेनामाशयस्यैव संकोचो वान्तिश्च।

तस्मात् कोष्ठागमनं तेषां यथा १३

तस्मात्कारणात्तेषां वातपित्तश्लेष्मणां प्रदुष्टदोषाणां कोष्ठेष्वेवागमनं स्याद्यथा तथा प्रयत्नो विधेयः।



नर्ते द्रवत्वात्कोष्ठागमनम् १४

तत्र तेषां प्रदुष्टदोषाणां स्रोतःसुनिबद्धानाँ द्रवत्वादृते कोष्ठागमनं न सम्भवम्।

न तत्कर्तुं समर्थमृते, स्वेदनात् १५

तत्र च स्वेदनकर्मण ऋते, नान्यत्कर्म, यत्तत्कर्तुं (द्रावयितुं) समर्थमिति।

तस्मात्स्वेदनपूर्वकाण्येव कर्माणि १६

तस्मात्कारणात्स्वेदनपूर्वकाण्येव सर्वाणि कर्माणि क्रियेरन्।

न च तद्द्रवत्वमृते, मार्दवविघटनविलयनेभ्यः १७

किन्तु तेषां दोषाणां द्रवत्वं तु न तेषां मार्दवेण विघटनेन विलयनेन च विना शक्यं कर्तुम्।

न स्नेहादृते तत्साधनसमर्थम् १८

तथा च स्नेहातिरिक्तं न किमपि द्रव्यं तत्साधनेऽर्थात् मार्दवसिद्धौ विघटनसिद्धौ तथा च विलयनत्त्वसाधने समर्थम्।

## प्रवृद्धशोणितस्नेह एव तथाकर्तुम् १९

किन्तु शनैः शनैः वृद्धिमापन्नः शोणितस्नेह एव मार्दवादिकर्म कर्तुं समर्थः; सर्वगतित्वाद्रक्तेन सह। ननु किमयं शोणितस्नेह इति? तदुच्यते शोणिते मिश्रितो यः स्नेहः स शोणितस्नेहः। शोणिते विद्यमानो वा स्नेहः शोणितस्नेहः। स स्नेहः स्वप्राकृतमात्रातः प्रवृद्धः परिवर्धित इति।

## नान्यथाऽत्यन्तनिबद्धमार्दवादि २०

न चेत्स्वाभावाविकमात्रातः परिवर्धितः स्नेहो, नात्यन्त-निबद्धानां दोषाणां मार्दवादि कर्तुं शक्यम्। उचिताहारविहारजन्यात्यल्पप्रदुष्टदोषानेव स्वाभाविकशोणितस्नेह आत्मसात्कुरुते न तु मिथ्याहारविहारातियोगजन्यात्यन्तप्रदुष्टप्रवृद्धनिबद्धदोषानिति, सामार्थ्याभावादल्पत्वाच्च। तद्यथा लोष्ठं नात्यल्पमात्रतोयेन क्लिन्नं मृदु च कर्त्तुं शक्यम्।

## तस्मात्परिवर्धनीया शोणितस्नेहमात्रा २१

तस्माद्धेतोः शोणिते स्नेहमात्रा परिवर्धनीयेति।

## तस्मात्स्नेहनं तत्पूर्वकमेव स्वेदनं रुक्षादृते २२

तस्मात्स्नेहनं स्नेहपानादिभिर्विधीयते रुक्ष-स्वेदनादृते। तत्स्नेहनपूर्वकमेव स्वेदनमपि।

## दीपनपाचनपूर्वकमेव सहापि च २३

तच्च स्नेहनमपि दीपनपाचन पूर्वकमेवदद्यात्। किं कारणम्? उच्यते। यस्याग्निर्मन्दो, न दीपनपाचनादृते स्नेहोजीर्णो भवति। यस्य च समाग्निस्तस्यापि नित्यं वर्धिता स्नेहमात्रा न दीपनपाचनादृते जीर्णा शक्या भवितुम्। अजीर्णे च स्नेहे न सम्यक्स्नेहनं शक्यम्। तस्मात्पूर्वं दीपनपाचनेनाग्निस्तीक्ष्णः कार्यः। तीक्ष्णाग्नये तु न दद्यात्। अनावश्यकत्वात्। हानिकरत्वाच्च वा भूयः। तथा च स्नेहदानेन सहापि दीपनपाचनं दद्यात्।

## मृदुपाकश्च सः २४

तत्र स्नेहनकर्मणि प्रयोज्यमाणस्नेहस्तु मृदु पाक एव स्यात्।

## ततश्चस्निग्धस्विन्नानामेव कर्माणि २५

ततश्च तथा विधस्निग्धस्विन्नानां कोष्ठागतदोषाणामेव रोगिणां कर्माणि विधीयन्ते। इति रहस्यम्।

प्रतिकर्म पूर्वनिर्देशः पूर्वकर्मत्वञ्च २६

अतएव कर्म कर्मप्रत्यपि पूर्वंस्नेहनस्वेदनयो र्निर्देशः तस्मात्पूर्वकर्मत्वमेवोभयोरिति। दीपनपाचनमपि सर्वतः पूर्वमितिकेचित्। तस्माच्चत्वारि पूर्वकर्माणि दीपनपाचनस्नेहनस्वेदनानीति चापि केषाञ्चिद्विदुषां मतम्। स्नेहस्वेदने द्वे एव सामान्येन।

इति श्रीजगदीशाचार्य-विरचिते षट्कर्मशास्त्रे तृतीयो मयूखः।

# अथ चतुर्थो मयूखः

दिनत्रयं दीपनपाचनम् १

तत्र पूर्वं दिनत्रयं यावद्दीपन पाचनं दद्यात्।

आदिवसत्रयात्सप्तपर्यन्तं स्नेहनावधिरालक्षणदर्शनात् २

तत्र दिवसत्रयादारभ्य, सप्तदिवसपर्यन्तं स्नेहनकर्मणोऽवधिरस्ति। तृतीयसप्तमयोर्दिनयोर्मध्ये यावत्कालपर्यन्तं सम्यक्स्निग्धलक्षणानामुदयस्तावत्कालपर्यन्तमेव, स्नेहनकर्म प्रशस्तम्।

कालयापनमेव सात्म्यीभवनादनर्थकरत्त्वाच्च ३

सम्यक्स्निग्धलक्षणदर्शनानन्तरमपि स्नेहनकर्म तु वृथा कालयापनमात्रमेव। यतो हि सप्तदिनं यावत् सप्तधातून् स्निग्धीकृत्य पश्चात्सात्म्यो भवति स्नेहः। अतिस्निग्धलक्षणानि कृत्वानर्थकरश्च भवति परतः।

आसप्ताहात्सप्ताहत्रयपर्यन्तं स्वेदनं तल्लक्षणावधेः ४

स्वेदनस्यापिकालावधिरुच्यते। सप्ताहात्सप्ताहत्रयं यावत्। अर्थात् सप्तदिनेभ्य एकविंशतिदिनपर्यन्तमेव स्वेदनं कर्मेष्टम्। तयोर्मध्ये सम्यक्स्विन्नलक्षणोदयावधिपर्यन्तमिति।

पुनश्चेन्मासानन्तरमेवाविघ्नकरत्त्वात् ५

पुनश्चेदिष्टं स्वेदनं कर्म, तर्हि मासानन्तरमेव, पूर्वस्वेदनकर्मसमाप्त्यनन्तरम्।

प्रतिकर्मपूर्वनिर्देशस्तु स्वल्पकालिकयोरेव सद्यः स्निग्धस्विन्नत्वाय ६

यः प्रतिकर्म पूर्वनिर्देशः कृतः स्नेहनस्वेदनयोस्तत्कथं वमनानन्तरं पेयादिक्रमानन्तरञ्च विरेचनात्पूर्वं कर्त्तुं शक्यमितिचेन्न, स्वल्पकालिकयोः क्षणिकयोः सद्यः स्नेहनस्वेदनयोरेव तन्निर्देशो न तु पौनःपुन्येन तावत्कालयापनावश्यकतेति ।

ततश्च स्नेहस्वेदोपपन्नं समुत्क्लेश्य श्लेष्माणं वामयेदासम्यग्वान्तलक्षणदर्शनात् ७

तदनन्तरं सभ्यक्स्विन्नमातुरं वामक-द्रव्यैर्वामयेत् किन्तु रोगिण आभ्यन्तरश्लेष्माणं सम्यगुत्क्लेश्यैव । तद्वमनावधिस्तु सम्यग्वान्तलक्षणदर्शनपर्यन्तमेव ।

ततः पेयादिक्रमोऽन्यकर्मबलाय ८

सम्यग्वमनानन्तरं पेयादिक्रम आहारस्य विधेयः किमर्थमित्याह, विरेचनकर्म, सोढुं बलप्राप्तये । वमनान्तरंकर्म वा सोढुम् । दौर्बल्यापनयनार्थमितिशेषः ।

प्रवरमध्यहीनवेगेभ्यस्तिसृद्वैकानुवृत्तिभिः ९

स च पेयादिक्रमो वेगानुसारं विधेयः । तत्र प्रवरवेगाय तिस्रस्तिस्रोऽनुवृत्तयो विधेयाः पेयादीनाम् । मध्यवेगाय खलु द्वेद्वेऽनुवृत्ती हीनवेगाय तु रोगिण एकैकवारमेव पेयादिकं दद्यात् । अर्थात्प्रवरवेगाय वारत्रयं सायंप्रातः सायञ्चेति पेया । ततो वारत्रयं विलेपी प्रातःसायं प्रात इति तथैव कालक्रमेणाग्रेऽपि । तथैव मध्यवेगाय द्विद्विवारमेव, हीनवेगायैकैकवारमेवेति विस्तरः । किं कारणमित्युच्यते । प्रवरवेगेषु दौर्वल्याधिक्यम् । मध्यवेगेषु स्वल्पतरदौर्वल्यं, हीनवेगेषु स्वल्पतम-दौर्वल्यं जायते । तस्मादुत्तरोत्तरमाश्वाश्वेव दौर्वल्यापनयनं सिद्धं भवति ।

तृणगोमयसमित्काष्ठैरण्वग्निवत्पेयादिभिरन्तराग्निवलवृद्धिः १०

तद्यथाणुरप्यग्निः क्रमशस्तृणैर्गोमियोपलैः समिद्भिस्तदनन्तरं काष्ठैश्च बहु वर्धते शनैः शनैस्तथैव वमनेन मन्दीभूतोऽग्निर्जठरस्यापि पेयादिभिर्लघुभिराहारैः क्रमशः शनैः शनैः पूर्णाहारैश्च बहु बर्धते । वलवृद्धिश्च भवति ।

पेयाविलेप्यकृतकृतयूषमांसरसपूर्णाहारा इति ११

ननु कश्च तर्हि पेयादिक्रम इत्याकांक्षायामुच्यते पेया, विलेपी, अकृतयूषः, कृतयूषः, अकृतमांसरसः, कृतमांसरसः पूर्णाहारश्च सप्तम इति सप्तविधः ।

## रसाभ्यासश्च सहैव १२

तथा च पेयादिभिरेव सह रसाभ्यासोऽपि विधेयः। पृथग्रसाभ्यासेन तु दीर्घकालव्यवधानं भवत्यन्यकर्मणि। न चर्ते रसेभ्यः पेयादिद्रव्यकल्पना भवति। तत्र शास्त्रोक्त-विधिना सहैव रसकल्पना विधेया। यथा-रुचिरपिच। तद्यथा मधुराम्लरसाभ्यां प्रथमं साधयेत्। अम्ललवणाभ्यां तदनन्तरम्। ततः कटुतिक्ताभ्यां ततस्तिक्तकषायाभ्यामिति यथाक्रमं यथारुचिश्च कल्पयेत्। अर्थात् पूर्वं वातघ्नैस्ततः पित्तघ्नैस्ततः कफघ्नैरिति। यतः संशुद्धेर्दुर्वलस्य पूर्वं वातापत्तयस्ततः पित्तापत्तयस्ततः कफापत्तय एव जायन्ते। इति रहस्यम्।

## यथादोषं पुनर्वामयेत्पेयादिक्रमश्च १३

तत्र दोषावशेषश्चेत्प्रथमे, वमने, तदा तु पेयादिविधानं कृत्वा समर्थं पुनर्वामयेत्पेयादिक्रमश्च कुर्यात् पुनः।

## ततो विरेचयेत्पेयादिक्रमान्ते पित्तमुत्क्लेश्य १४

तदनन्तरं पेयादिक्रमान्ते पित्तमुत्क्लेश्य विरेचनं दद्यात्।

## पञ्चमेऽष्टमे द्वादशे चेति दिने १५

तच्च विरेचनं हीनवेगाय पञ्चमे दिने मध्यवेगायाष्टमे दिने प्रवर-वेगाय खलु द्वादशे दिने गणनया देयम्।

## पुनर्वा स्नेहनस्वेदनपूर्वकं प्रशस्तत्वात् १६

पुनर्वा स्नेहनं कृत्वा स्वेदनञ्च कृत्वा विरेचयेत्। प्रतिकर्म, पूर्वकर्म, प्रशस्तं हि भवति बहुगुणकरञ्च।

## ते चाल्पकालिके पर्य्याप्ते १७

ते च पुनः कृतेऽल्पकालिकेऽपि स्नेहन-स्वेदने पर्य्याप्ते भवतः। सकृत स्यक्स्निग्धस्विन्नत्त्वात्।

## अत्यन्तरुक्षवातलकोष्ठायानुवास्यास्थाप्य च १८

तत्र यदि चेद्रोगिणः कोष्ठोऽत्यन्तरूक्षो वातलश्च स्यात्, तदा कोष्ठं पूर्वमनुवासयेन्नित्यं मात्रावस्तिभिः। अथवा पूर्णानुवासनैरनुवास्यास्थाप्य च यथाक्रममेव विरेचनं दद्यात्।

## न तु सद्यः १९

किन्तु वस्तिभिः कोष्ठस्य रुक्षत्वापनयनान्तेऽपि सद्य एव न दद्याद्विरेचनमिति विशेषः। किं कारणमित्यग्रे, वक्ष्यते, शून्यदेहविकसनादिभयम्। अपि तु पेयादिक्रमान्ते सप्तदिनानन्तरमेव न पूर्वम्।

## पचत्यन्यथा तत् २०

किं कारणमनुवास्यास्थाप्य च देयमित्युच्यते, रौक्ष्याधिक्यात्कोष्ठे विरेचनं पचति, न विरेचयति।

## पुनश्च पेयादिक्रमः शुद्ध्यनुसारम् २१

पुनश्च पूर्ववदेव पेयादिक्रमोविधेयः प्रधानमध्यावरशुद्ध्यनुसारेण तिसृद्वयैकानुवृत्तिभिरिति। शुद्धिलक्षणानि खल्वग्रे वक्ष्यन्ते तत्प्रकरणे।

## अल्पपित्तकफशुद्धमद्यपवातपैत्तिकयोस्तर्पणादिक्रम एव २२

न हि सर्वत्रैव पेयादिक्रम एव, अपितु यद्यल्पशुद्धिः पित्तकफयोस्तथा च मद्यपोरोगी, वातपित्तप्रकृतिरपि तयोस्तु तर्पणादिक्रम एव हितः। पेयास्थाने तर्पणमेवकृत्वा शेषैर्विलेप्यादिभिस्तर्पणादिक्रम उच्यते। तर्पणमादौ यस्य क्रमस्य स तर्पणादिक्रमः।

## यथादोषं पुनः पुनर्वा २३

यथादोषावशेषं पुनः पुनः पेयादिक्रमं कृत्वा विरेचनं दद्यात्, न यावत्कालं सम्यक् शुद्धिः।

## ततो निरुहान्नवमेऽह्नि घृतं पाययित्वानुवास्य वा २४

विरेचनेन सम्यक् शुद्ध्यनन्तरं घृतं पाययित्वा वानुवासनं दत्वा नवमेऽह्नि निरूहाः प्रारभ्येरन्। मध्यगेषु सप्तदिनेषु पेयादि क्रमोविधेयः।

## रूक्षाशयत्वाच्छरीरविकर्षणम् २५

अन्यथा विरेचनेन पुना रूक्षाशयत्त्वाच्छरीरस्य विशेषेण कर्षणं जायते। तस्मात्सप्तदिनान्यवश्यं वर्जयेत्।

## स्नेह स्वेदोपपन्नं वस्तिभिरुपकारितरत्त्वात् २६

स्नेहनस्वेदने कृत्त्वैव रोगिणमुपक्रमेद्वस्तिभिरपि, उपकारितरत्त्वात्तथाविधेन।

## सकृदेव निरूहोऽनुवासनं वा २७

तत्र प्रतिदिनं निरूहणं वानुवासनं सकृदेव कुर्यात् ।

## नानुवासनं प्रतिदिनमृते मात्रावस्तेः २८

अनुवासनं तु प्रतिदिनं न दद्यात् मात्रावस्तिं परित्यज्य । मात्रावस्तिस्तु स्वल्पस्नेहमात्रात्वान्नित्यं दातुं शक्यः ।

## तृतीये तृतीये पञ्चमे पञ्चमे वा दिनेऽनुवासयेत् २९

अपि तु तृतीये तृतीये दिने, एकमेकं दिनं परित्यज्य मध्ये मध्ये, वा त्रीणि त्रीणि दिनानि परित्यज्य मध्ये मध्ये, पञ्चमे पञ्चमे दिनेऽनुवासनं दद्यात् ।

## निरूहाः प्रतिवासरं, न दिनत्रयादधिकम् ३०

निरूहास्तु प्रतिवासरं दातुं शक्याः । किन्तु दिनत्रयादधिकं न दद्यात् । रूक्षत्त्वभयं कोष्ठस्य ।

## न युग्मान् प्रयुञ्जीतायुग्मत्वाद्दोषाणाम् ३१

सर्वानपि वस्तीन् युग्मान्न दद्यात् । अयुग्मानेव दद्यात् । किं कारणम् ? दोषाणामयुग्मत्त्वादयुग्मवस्तिक्रमो वैज्ञानिकः ।

## कफपित्तवातजेषु त्वेकं त्रीन्वा पञ्च सप्त वा नवैकादश वा ३२

तत्र कफजविकारे त्वेकं त्रीन्वा वस्तीन् निरूहान्दद्यात्, पित्तजविकारे तु पञ्च सप्त वा, सानुवासनान्निरूहान्, वातजविकारे तु नवैकादश वा निरूहान्सानुवासनान् दद्यात् ।

## योगवस्तीन्वात्यन्तश्लेष्मवृद्धौ ३३

अथवा, अत्यन्तश्लेष्मवृद्धौ वा घोरश्लेष्मव्याधावष्टसंख्यकान्योगवस्तीन् दद्यात् । योगवस्तयस्तु क्रमशोऽनुवासनिरूहानुवासनिरूहाऽनुवासनिरूहानुवासानुवासा इति द्वावन्ते ।

## कालवस्तीन्वा पञ्चदश पित्तजेषु ३४

अथवा पित्तजविकारेषु पञ्चदशसंख्यकान् कालवस्तीन्दद्यात् । कालवस्तयस्तुक्रमशो यथा, अनु० नि०, अनु० नि०, अनु० नि०, अनु० नि०, अनु० नि०, अनु० नि०, अनु० अनु० अनुवासास्त्रयोऽन्ते ।

## कर्मवस्तीन्वा त्रिंशद्वातजेषु ३५

अथवा घोरवातव्याधिषु त्रिंशत्संख्यकान् कर्मवस्तीन्दद्यात्। कर्मवस्तयस्तु क्रमशो यथा—अनु० अनु० नि०, अनु० नि०, अनु० नि०, अनु० नि०, अनु० नि०, अनु० नि०, अनु० नि०, अनु० नि०, अनु० नि०, अनु० नि०, अनु० नि० अनु० नि०, अनु० अनु० अनु० अनु० अनुवासाः पञ्चान्ते द्वाविति चादौ।

## खरपाक एव वस्तौ ३६

तत्र वस्तौ तु स्नेहः खरपाक एव प्रयोज्यः। न मृदु-मध्य-पाकौ।

## ततः पेयादिक्रमः पूर्ववदेव ३७

तदनन्तरं पुनः पूर्ववदेव पेयादिक्रमो विधेय इति।

## परिहारकालस्तु द्विगुणः ३८

वस्तिषु यावान् कालो व्यत्येति ततो द्विगुणः कालः परिहारस्य भवतीति। परिहारस्त्वग्रे वक्ष्यतेऽत्यासनवचनयानादिः।

## पुनः स्निग्धस्विन्नोत्तमाङ्गाय नस्यम् ३९

पुनः खलूत्तमाङ्गं स्निग्धं स्विन्नं कृत्वा नस्यं विदधीत तस्मै।

## प्रधानमध्यावरबलमलान्त्रीणि द्व एकम् ४०

तद्धि नस्यं, प्रधानबलं मलं समीक्ष्य त्रीणि नस्यानि, मध्यबलमलं समीक्ष्य द्वे, अवरबलमलं समीक्ष्य त्वेकमेव।

## तृतीये प्रतिदिनं वा शक्ताय ४१

तद्धि नस्यं तृतीये तृतीये दिने देयम्। शक्ताय तु नित्यम्।

## ततः पेयादिक्रमो हीन-शुद्ध्यनुसारम् ४२

ततो हीन-शुद्ध्यनुसारेण पेयादिक्रमो विधेयः। अनतिदौर्बल्यात्।

## रक्तविकारेषु रक्तमोक्षणमपि ४३

ततो रक्तविकारेषु शोणितविस्रावणमपि यथाविधि कार्यम्।

## वातकफपित्तजेषु शृङ्गालावुजलौकोभिः ४४

वातजे रक्तविकारे शृङ्गेण, कफजेऽलावुना, पित्तजे जलौकसा शोणित मोक्षणं कुर्यात् ।

## प्रच्छानसिरावेधाभ्यां त्रिदोषजेषु ४५

तथा च प्रच्छानेन सिरावेधेन च त्रिदोषजविकारेषु । ननु कश्चात्र विशेषः प्रच्छानसिरावेधयोर्मध्ये ? उच्यते, यः खल्वेकदेशीयस्त्रिदोषः स प्रच्छानेन लवित्रेण निर्ह्रियते । यः खलु सर्वशरीरगतः सः सिरावेधेन निर्ह्रियते, प्रच्छानेनैकाङ्गुलं परितः सिरावेधेन सर्वाङ्गतः इत्यतः ।

## तत्र सिरावेधे पेयादिक्रमो रक्तवर्धनेन ४६

तत्र सिरावेधेन विस्रावणे कृते रक्तवर्धनोपायेन सह पेयादिक्रमो विधेयः एवेति ।

## इति सामान्येन कर्मणां क्रमः ४७

इति सामान्येन सर्वकर्मणां क्रमो वेदितव्य इति ।

## सवकर्मसु चिकित्सार्धो वस्तिररिति तत्त्वविदः ४८

तत्र ये खलु तत्वविदस्तेषां सिद्धान्तो यद्वस्तिस्तु सम्पूर्ण-चिकित्साया अर्द्धभागः । यतो हि वस्तिर्वयः स्थापयति वर्धयति च । सुखायुर्वलाग्नि-मेधास्वरवर्णकृदिति । तथा च सर्वार्थकारी भवति शिशूनांवृद्धानां यूनां स्त्रीणाञ्च । तथा बहुरोगहरत्त्वाच्चेति ।

## एके सर्वाऽपि सोऽनन्यभेषजत्वाद्वातस्य ४९

एकेचाचार्याः वदन्ति नार्धा, अपितु सर्वाचिकित्सा, वातस्यातिवृद्धि-स्यानन्यभेषजत्त्वात् वस्तेः । किमिदमनन्यभेषजत्वादिति ? उच्यते, नान्य-भेषजं तुल्यं येन विद्यते तदनन्यभेषजम् । तस्य भावस्तस्मादिति । न वातस्य वस्तिसममन्यभेषजम् ।

## वातस्यैवान्यदोषयोनियोनिदोषत्वात् तद्भेषजत्वाच्च वस्तेः ५०

यतो हि कफस्य योनिर्जलपृथिव्यौ पित्तस्य योनिरग्निः तेषां योनि-र्वायुः । तस्यदोषो वातस्तस्मात् सर्वामयकरो वात एव साहाय्येन । पङ्गुत्वादन्ययोरिति । तस्य चाति वृद्धस्य वातस्य वस्तिरेव केवलाचिकित्सा यतस्तस्मात्सर्वा चिकित्सा वस्तिरिति ।

## प्रधानेऽपि मूर्तयोरेव, कफस्य प्रमुखत्त्वात्स्रोतोऽवरोधे, क्रमशः ५१

तत्र शङ्क्यते यद्वात एव प्रधानश्चेत् वातस्यैव पूर्वं शोधनं हितमिति। तत्रोच्यते, सत्यपि प्रधाने वाते मूर्तयोरेव शोधनं पूर्वं हितं भवति। तयोरपि मूर्तयोः कफपित्तयोः पूर्वं कफस्यैव। किं कारणमित्युच्यते, स्रोतोऽवरोधे मूर्त्तद्रव्यमेव कारणं भवति विशेषेण। ते च कफपित्त एव। तयोरपि कफ एव प्रमुखः प्रथमोत्पन्नत्वात्। श्लेषकत्वाच्च कफस्य, तस्यैव प्रथमं स्रोतःसु स्थितिर्यतः स्रोतोऽवरोधः प्रारभ्यते। तस्मात्क्रमशः कफपित्तवातानां शोधनं हितम्। अतएव पूर्वं वमनं ततो विरेचनं ततो वस्तय इति रहस्यम्। वमनविरेचनाभ्यां संशुद्धस्रोतःस्वेव सम्यग्धावति तथा चानुवसति स्नेहो विशुद्धनलिकासु जलमिवेति।

## नावान्तस्य विरेचनमपि ५२

ननु विरेचनमेव प्रथमं क्रियेत, किं तेन हानिरित्युच्यते, अवान्तस्यामाशये कफसंचयः स वाधिष्यते विरचेनं, तदोल्वणतया वमिष्यति वा। तथा चावान्ते कफोपहतप्रभावे चौषधे भ्रमशूलादयो जायन्तेऽयोगश्चापि। तीव्रञ्चेद्विरेचनं कफमप्यामाशयगतमधः स्रावयद्ग्रहणीदोषं मन्दाग्निं गुरुतां प्रवाहिकाञ्च जनयिष्यति। तस्मान्न ह्यवान्तस्य पूर्वं विरेचनं दद्यात्। इति रहस्यं।

## अनुवास्यैवास्थापयेदिति ५३

ननु वमनविरेचनानन्तरमेव वस्तीन् दद्यादिति निश्चितम्। किन्तु तयोरनन्तरं वस्तिकर्मणि कः क्रमः? अनुवासनपूर्वको वास्थापनपूर्वक इत्याकांक्षांयामुच्यते, अनुवास्यैवास्थापयेदिति। अनुवासनपूर्वक एव क्रमः स्यात्। किं कारणम्? विरेचनेन रूक्षाशयत्वाद्विकसनं विकर्षणञ्च भवति शरीरस्यास्थापनेनापि। तस्यापि रूक्षत्त्वात् बहुशोधकत्वात्। तस्मादेव कारणात्पूर्वं स्नेहमेवानुवासयेच्छरीरे। न तेन तथा भयम्। तस्मादनुवास्यैवास्थापयेदपि। इति वस्तिक्रमः।

इति श्रीजगदीशाचार्य-विरचिते षट्कर्मशास्त्रे चतुर्थो मयूखः।

# अथ पञ्चमो मयूखः

## दीप्ताग्नेरेव स्नेहनम् १

सम्यग्दीप्ताग्नेरेव स्नेहनं कुर्यात्, नान्यथा जीर्यति स्नेहः ।

## संस्निग्धस्यैव स्वेदनं सुखविद्रवत्त्वात् २

तस्य च सम्यक्स्निग्धस्यैवातुरस्य स्वेदनं कार्यम् । यतो हि सुखेन दोषाणां विशेषेण द्रवत्वं भवति । किं कारणम् ? दोषाणां निबद्धानां शैथिल्यात्, मार्दवात्, विघटनात्, विलयनाच्चेति प्रवृद्धस्नेहे ।

## स्निग्धस्विन्नोत्क्लिष्टकफस्यैव वमनं सुखवाम्यत्वात् ३

यश्च सम्यक्स्निग्धो यश्च सम्यक्स्विन्नो यस्य चाहारैः कफ उत्क्लेशित-स्तस्यैव वमनं कर्म कुर्यात् । कि कारणम् ? सुखवाम्योहि स भवति । कोष्ठेषु दोषाणामागमनात् ।

## सम्यग्वान्तस्यैव विरेचनं मन्दकफत्वात् ४

सम्यग्वान्तो हि यो भवति तस्मै विरेचनं दद्यात् किं कारणं ? सुख विरेच्यो हि भवति सुवान्तः । किंकारणं ? सुवान्तत्वान्मन्दकफ एव विरेचयति ।

## सम्यग्विरिक्तस्यैव वस्तिकर्मणी सूक्ष्मायनसंशुद्धेर्वातस्य कोष्ठागतेः । ५

तथा च सम्यग्विरिक्तो यो भवति तस्यैव वस्तिकर्मणी निरूहानुवासने कर्त्तव्ये । किं कारणम् ? विरेचनेन सूक्ष्मायनानां सम्यक्शुद्धेः । परितोऽपि हि वातस्य कोष्ठ आगमनात् ।

## अनुलोमित्वाच्च नोद्ध्वंगतिर्वस्तेः सुखसाध्यत्वं प्रभावप्रसरश्च । ६

तथा च सूक्ष्मायनानां संशुद्धेर्वातस्य सम्यगनुलोमित्वाद्वस्तेरूद्ध्वंगमनं ग्रहण्यामामाशये च न भवति । किञ्चातः ? वस्तेः सुखसाध्यत्वं भवति । सुखेन वस्तिः प्रत्येति । तस्य प्रभावस्य सर्वशरीरे प्रसरश्च भवति ।

## ततोऽल्पदोषत्वान्नस्यम् ७

ततः प्रभूतदोषमात्रानिर्हरणादल्पोद्धर्वाङ्गदोषाणां सुखेन सम्यग्निर्हरणं साध्यं भवति तदर्थं वस्तेरनु शिरोविरेचनं दद्यात् । इति सर्वकर्मान्ते नस्य-प्रयोगे रहस्यम् ।

## ततो विस्रावणम् ८

तदनन्तरं वातपित्त-श्लेष्मभिः प्रदुष्टरक्तजविकारेषु शोणितविस्रावणं कुर्यात् । रक्तमात्राह्रासेनाशु शेषदोषाणां पाचनं भवति । निःसृतरक्तमात्रा-पूर्त्यर्थं स्वभावत आशूत्पन्ननवरक्तेनाशुनिर्हन्यते च शेष दोषः ।

## ततो वस्तिमूत्रजेषूत्तरवस्तयः ९

ततो हि वस्तिशूलादिषु मूत्रविकारेषु योनिविकारेषु चोत्तरवस्तयः प्रदेयाः, स्युश्चेत्ते विकाराः ।

## ततः सम्यगौषधप्रभावो रागस्येव १०

तदनन्तरमौषधीनां शरीरे प्रभावो भवति सम्यग्रूपेण । तद्यथा फेनिलादिभिर्निर्मले सञ्जाते वस्त्रे रागस्य सम्यक् शोभनश्च प्रभावो भवति तथैव संशुद्धगात्रे कर्मभिर्भवति सम्यक्प्रभावो, भेषजस्य । नान्यथेति ।

## इति कर्मणां रहस्यविज्ञानम् ११

इति सर्वकर्मणां रहस्यं विज्ञानञ्च वेदितव्यमुक्तमिति ।

इति श्रीजगदीशाचार्यविरचिते षट्कर्मशास्त्रे पञ्चमो मयूखः

# अथ षष्ठो मयूखः

## तत्र पुरीषस्निग्धत्त्वादीनि स्निग्धलक्षणानि १

तत्र सम्यक्स्निग्धानामस्निग्धानामतिस्निग्धानां परिज्ञानार्थं लक्षणान्युच्यन्ते । सर्वकर्मणाञ्च सम्यक्कृतादीनां लक्षणान्यप्युच्यन्तेऽग्रे । तत्र सम्यक्स्निग्धस्य लक्षणानि पुरीषस्निग्धत्वादीनि । कानि च तानीति ? पुरीषेस्निग्धता, पुरीषेऽग्रथितत्वं वायुनिःसरणं, दीप्ताग्नित्वं, मार्दवं गात्रस्य, त्वचि स्निग्धतेति । किंचिद्वांत्यनुभूतिश्च ।

## वारितरस्निग्धपुरीष एव लक्षणाय २

तत्रयश्च स्निग्धपुरीषो वारितरोभवेत् स एव सम्यक्स्निग्धत्वाय लक्षणीभूतो मन्यते । यतो हि यदा स्नेहः सूक्ष्मातिसूक्ष्मस्रोतःसु प्राप्नोति तदा यश्चान्त्रस्रोतोगतः स एव स्नेहः पक्वे जातेपुरीषे युज्यते शनैः शनैरान्त्रस्रोतोभ्यः प्रत्यागत्य निःसरन् वहिर्मुखः । तेन च स्निग्धोजातः पक्वपुरीषो वारितरो भवति । तदेव सम्यक्स्निग्धलक्षणम् । यदा तु सहसैवाधिकस्नेहः पीयते स तु मात्राधिक्यात् पाचनसामर्थ्याभावाच्च शीघ्रमेवाधः सरति । स्वयमधः सरन्नपक्वपुरीषमपि स्निग्धतया सारयत्यध इति । स च पुरीषो बहिरेव स्निग्धो भवति तथा चापक्वोऽपि । स एव पुरीषो न वारितरो भवति । प्रक्षिप्तश्चेज्जले, न तरत्योपरि । किं कारणम् ? अपक्वतया गुरुत्वं तत्रजलापेक्षया भवति । तस्मात्पुरीषस्य स्निग्धता नेत्राभ्यामेव दृष्ट्वा न मन्येत, यत्सम्यक्स्निग्धता जातेति । किन्तु वारितर-परीक्षां कृत्वैव ।

## विपरीतान्यस्निग्धलक्षणानि ३

ततो विपरीतानि तु भवन्ति लक्षणान्यस्निग्धानाम् । तद्यथा रूक्षत्वं, पुरीषे-ग्रथितत्वं, वायोरनिःसरणमग्निमान्द्यं त्वग्रौक्ष्यममार्दवञ्च गात्रस्येति । तथा च वान्तेः सर्वथाननुभूतिश्चेति ।

## पाण्डुत्वादीनि त्वतिस्निग्धस्य ४

तथा च पाण्डुत्वं गात्रगौरवं, जाड्यमपक्वपुरीषस्तन्द्रा, आहारेऽरुचिरुत्क्लेशश्चातिस्निग्धानां लक्षणानि । तत्र पाण्डुत्वस्य किं कारणमित्युच्यते । रक्ते स्नेहस्य श्वेतकणानां परिवृद्धेः । त्वचो नीचैस्तेषां संचयत्वाच्चाकस्मात्पाण्डुता ।

## शैत्यादिनिवृत्तिः स्विन्नानाम् ५

तथा च शैत्यनिवृत्तिः शूलशान्तिरस्तम्भो गात्रस्य लाघवं मार्दवञ्च गात्रस्य सम्यक् स्विन्नानां लक्षणानि । वान्तिरपि तदानुभूयते, कोष्ठागतकफत्वात् ।

## विपरीतानि त्वस्विन्नलक्षणानि ६

तेभ्यो विपरीतानि तु शैत्यं शूलं गात्रस्तम्भो गौरवं मार्दवञ्चास्विन्नानां लक्षणानि भवन्ति । वान्तेरनुभूतिरपि न भवति तदा । कोष्ठेऽनागतकफत्वात् ।

## पित्तप्रकोपादीन्यतिस्विन्नानाम ७

अतिस्विन्नानां खलु पित्तप्रकोपः, मूर्च्छा, गात्रसादः, तृष्णाधिक्यं, दाहः, गात्रदौर्वल्यमिति लक्षणानि ।

## क्रमशः कफपित्तानिलागमादीनि वान्तस्य ८

तत्र सम्यग्वान्तस्य लक्षणान्युच्यन्ते । यस्य पूर्वं कफागमो मध्ये पित्तागमः पश्चादनिलागमो भवति वान्तिषु, हृत्पार्श्वमूर्धेन्द्रियाणां शुद्धेर्गात्र लाघवञ्च यस्य, स सम्यग्वान्त इत्येतानि च तस्य लक्षणानि भवन्ति ।

## स्फोटकत्वादीनि त्ववान्तस्य ९

यस्य च सन्धिषु स्फोट इव, कोठः, कण्डूः, गात्रगौरवं हृदिन्द्रियाणाञ्चाविशुद्धिरिति त्वसम्यग्वान्तलक्षणानि ।

## वेगानागमः सर्वथावान्तस्य १०

वेगानामनागमस्तु सर्वथाऽवान्तस्य सर्वविदितलक्षणम् ।

## तृष्णादीन्यतिवान्तस्य ११

तत्रातिवान्तस्य तु तृष्णा मोहो, ऽन्धकारइति, मूर्च्छा वातप्रकोपो, निद्रा, वलस्यातिहानिरितिलक्षणानि ।

## स्रोतो विशुद्धयादीनि सम्यग्विरिक्तस्य १२

तथा च स्रोतोविशुद्धिरिन्द्रियाणां सम्प्रसादश्चैतन्यमिति, गात्रलाघवमूर्जता मनस्तेज इति, अनामयत्वं विवन्धनाशादि दीप्ताग्नित्वं क्रमशो विट्पित्तकफानिलागमः सम्यग्विरिक्तस्य लक्षणानि भवन्ति ।

## त्रिदोषप्रकोपादीन्यविरिक्तस्य १३

तथा च त्रिदोषस्य प्रकोपः, स्वेद, अग्निमान्द्यं गात्रगौरवं, तन्द्रा, छर्दिः, अरुचिः वातस्याननुलोमिता चेति त्वसम्यग्विरिक्तस्य लक्षणानि भवन्ति ।

## प्रसुप्त्यादीनि त्वतिविरिक्तस्य १४

प्रसुप्तिर्गात्राणां, मूर्च्छा, गात्रमर्दः क्लमो वेपनं निद्रा तमो हिक्का, उन्मादो वलातिहानिरिति त्वतिविरिक्तस्य लक्षणानि ।

## विण्मूत्रसमीरणत्त्वादीनि सम्यग्निरूढस्य १५

विटोमूत्रस्य च समीरणत्त्वं, रूचिः दीप्ताग्नित्त्वमाशयलाघवं, रोगशान्तिः प्रकृतौ शरीरस्थितिः समदोषत्वमिति, वलञ्चसम्यग्निरूढ़स्य लक्षणानि भवन्ति ।

## हृत्पीडादीन्यसम्यग्निरूढ़स्य १६

तत्र हृच्छिरोगुदलिङ्गकोष्ठेषुपीड़ा, प्रतिश्यायः, विर्कतिका, हृल्लासः कासः श्वासः अरुचिः मूत्र-पुरीषयोः सङ्ग इत्यसम्यग्निरूढस्य लक्षणानिज्ञेयानि ।

## अतिविरिक्तस्यैवातिनिरूढस्य १७

यानि खलु ह्यतिविरिक्तस्य लक्षणानि तान्येवातिनिरूढस्य लक्षणानि भवन्ति ।

## यामत्रयेण सपुरीषतैलागमादीनि सम्यगनुवासितस्य १८

तत्र यामत्रय-पर्यन्तं तैलस्य, स्थितेरनन्तरं तस्य सपुरीषागमनं, सप्तधातूनामिन्द्रियाणाञ्च चैतन्यं, सुखनिद्रा, गात्रलाघवं बलं सम्यग्वेगा इति सम्यक्कृतानुवासनस्य लक्षणानि ।

## सार्वत्रिकपीडादीन्यसम्यगनुवासितस्य १९

तत्र सर्वशरीरगतपीड़ा, पुरीषे, रौक्ष्यंखरत्त्वं, विण्मूत्रयोरनिर्हरणं सङ्गश्चेति लक्षणान्यसम्यगनुवासितस्य भवन्ति ।

## हृल्लासादीन्यत्यनुवासितस्य २०

तथा च हृल्लासो, मोहः क्लमो गात्रसादो मूर्च्छा विर्कतिका चेति लक्षणान्यतितैलदानस्येति ।

## उरोलाघवादीनि नस्तस्य २१

यस्तु सम्यग्नस्तस्तस्य तूरोलाघवं शिरोलाघवमिन्द्रियलाघवं, स्रोतोविशुद्धिश्चेति लक्षणानि

## गलग्रहत्त्वादीनि दुर्णस्तस्य २२

यः खलु दुर्णस्तोऽर्थादसम्यक्शिरोविरिक्तस्तस्य गलप्रदेशस्य ग्रहत्वं शिरोगुरुत्वं निष्ठीवनत्वञ्च लक्षणानि ।

## शिरः पीडादीनि त्वतिनस्तस्य २३

यस्त्वतिशयेन शिरोविरिक्तस्तस्य खलु शिरोऽक्षि शंखश्रवणादिषु तोदः पीडाच । तिमिरञ्च पश्यति ।

## स्वतोऽवस्थानत्त्वादीनि विस्रावितस्य २४

रक्तं विस्रावितं स्वतश्चेदवरुद्धचते, गात्रलाघवं, वेदनाशान्तिर्व्याधिवेगक्षयो मनःप्रसादत्वं सम्यक्शोणितमुक्तस्य लक्षणानि ।

## विपरीतानि त्वविस्रावितस्य २५

तेभ्यो विपरीतानि लक्षणानि त्वसम्यग्विस्रावितस्य ।

## अति दौर्वल्यादीनि त्वतिशयस्य २६

अतिदौर्वल्यं मूर्च्छाऽशक्तिर्नाडीमान्द्यमग्निमान्द्यं कम्पः पाण्डुतेति त्वतिविस्रावितस्य लक्षणानि ।

## मूत्रविकृतिनिवृत्यादीन्युत्तरानुवासितस्य २७

तत्रोत्तरानुवासितस्य लक्षणानि तु मूत्रविकृतिवस्तिशूलादिशान्तिरिन्द्रियचैतन्यञ्चेति ।

## विपरीतान्यसम्यक्कृतस्य २८

तेभ्यो विपरीतानि लक्षणानि त्वसम्यगुत्तरानुवासितस्येति ।

## आशुमूत्रप्रवृत्यादीनि त्वतिशयस्य २९

आशुमूत्रप्रवृत्तिरङ्गजाडचमान्द्ये, सांस्थानिके, त्वतितैलदानस्य, लक्षणानि भवन्ति ।

### गात्रलाघवादिलक्षणान्युत्तरास्थापितस्य ३०

तत्र मूत्राशययोनिगर्भाशयाणां लाघवं व्रणादिशुद्धिः शूलशान्तिर्मनः प्रसादत्वंञ्चैतन्यं गात्रेषु तु सम्यगुत्तरास्थापितस्य लक्षणानि भवन्ति ।

### विपरीतान्यसम्यक्कृतस्य ३१

एभ्यो विपरीतानि लक्षणानि त्वसम्यगुत्तरास्थापितस्येति विज्ञेयम् ।

### तान्येवात्युत्तरास्थापितस्य ३२

अत्युत्तरानुवासितस्य यानि लक्षणानि तान्येव त्वत्युत्तरास्थापितस्य लक्षणानि ज्ञेयानीति ।

इति श्रीजगदीशाचार्यविरचिते षट्कर्मशास्त्रे षष्ठो मयूखः

# अथ सप्तमो मयूखः

### अव्यापद्द्दीपनपाचनम् १

तत्र दीपनपाचनस्य व्यापदो न भवन्ति ।

### तत्र शूलज्वरादयः स्नेहव्यापदः २

अथ सर्वकर्मणामसम्यक्कृतानामतिकृतानाञ्च व्यापदः कथ्यन्ते । तत्र-स्नेहव्यापदो यथा शूलं, ज्वरमानाहः, तन्द्रा, उत्क्लेशः स्तम्भो विसंज्ञता, कुष्ठं, कण्डूः, पाण्डुता शोथोऽर्शः, अरुचिस्तृषा, उदररोगः ग्रहणीदोषः, आमदोषः, वाक्यनिग्रहः, स्तैमित्यानि ।

### वमनादिभिस्तच्चिकित्सा च ३

तत्र शूलादीनां वमनादिभिश्चिकित्साकार्या । तद्यथा शूलं वमनेव, ज्वरशोथस्तम्भवाक्य-निग्रहस्तैमित्यानि स्वेदनेन, आनाहं कालप्रतीक्षया, विसंज्ञता शीतलोपचारैः, तृषां शीताम्बुदानेन, अरुचिं तक्रेण, जठरमरिष्टेन, तन्द्रार्शांसि रूक्षान्नपानेन, उत्क्लेशं त्रिफलासेवनेन, ग्रहणीदोषं गोमूत्रेण, आमदोषं खलु स्रंसनेन चिकित्सेत् ।

## भ्रमादयो हि स्वेदनस्य ४

तथा च स्वेदनस्य व्यापदो यथा भ्रमो, दाहो, मूर्च्छा, स्वेदाधिक्य गात्रदौर्बल्यं सादस्तृषेति ।

## तान्ग्रैष्मिकैस्तस्याशितीयोक्तैश्चिकित्सेत् ५

ताः खलु व्यापदो ग्रैष्मिकैः शीतलोपचारैस्तथा च चरकस्य तस्याशितीयाध्यायोक्तैरुपक्रमैश्चिकित्सेत् ।

## आध्मानादयो वमनविरेचनयोः ६

तथा चाध्मानस्रावहृद्गात्रग्रहविभ्रंशक्लमोपद्रवाः वमन-विरेचनयोर्व्यापदोऽयोगात् । परिकर्तिकाजीवादानस्तम्भा अतियोगोत्पन्नाः । ताअपि यथायथं चिकित्सेत् । तद्यथाध्मानमभ्यङ्गस्वेदनवस्तिभिः, स्राव वमनेनैव तदनन्तरं पावनासवारिष्टैश्च, तथैव हृद्ग्रहमपि, स्नेहाभ्यङ्गस्वेदनैरङ्गग्रहं, विभ्रशं पुनर्वमनेनैव, क्लमं लंघनपाचनैरुपद्रवं स्नेहस्वेदैर्वातघ्नैरेव यतो हि वातोपद्रवा एव जायन्ते । परिकर्तिकां खलु लंघनपाचनैः, जीवादानं रक्तदानेन शामकैश्च, स्तम्भं लंघनपाचनतीक्ष्णविरेचनैश्चेति । तथा च विरेचनजन्यपरिकर्तिकाजीवादानयोः पिच्छावस्तिर्देयः परिस्रावं विरेच्यैव दीपनपाचनैरेव चिकित्सेत् ।

## अयोगादयो निरूहस्य ७

तत्रायोगः क्लम आध्मानमूर्द्ध्वता, प्रवाहिका, शिरोपीडेति षड्योगजन्याः गात्रपीडाऽतियोगो हिक्का हृत्प्राप्तिः परिकर्तिः परिस्रवाः निरूहवस्तेर्व्यापदोऽतियोगजाः । ता अपि सर्वा यथा चिकित्सासिद्धान्तास्तथा चिकित्सेत्तद्यथा, अयोगाद्विबन्धं जातं तीक्ष्णविरेचनेन वस्तिना वा, क्लमं स्वैदनपाचनरुक्षौषधैः, आध्मानमभ्यङ्गस्वेदानुवासनैरूद्ध्वंगतमनुलोमाभ्यङ्गप्राणायामानुलोमकैर्वस्तिभिः । मूर्च्छाचिन्मुखे शीतलजलावसेकनेन, प्रवाहिकांशोधनपिच्छावस्तिभिः, शिरःपीडां सैन्धवस्नेहाभ्यङ्गप्रधमननस्यवैरेचनिक धूम्रपानैश्चिकित्सेत् । तथाचातियोगजमङ्गरूकं गात्रपीडामिति सैन्धवस्नेहाभ्यंगोष्णजलावसेकवातहरस्वेदनानुवासनैः कुक्षिशूलमतियोगजं पिच्छावस्तिशीतलोपचारैर्दाहजन्यत्वात् । परिकर्तिं क्षीरवस्तिना परिस्रावं पिच्छाक्षीरवस्तिभ्यां शीतलोपचारैर्हिक्कां धूम्रपानैर्वातघ्न पदार्थसेवनैश्च हृत्प्राप्तिर्नाम हृच्छूलस्तं तु वातघ्नानुवासनैश्चिकित्सेत् ।

## षडनुवासनस्य ८

तत्र षड्व्यापदस्त्वनुवासनस्य भवन्ति वातावृतत्त्वपित्तावृतत्त्वकफावृतत्त्वाहारावृतत्त्वपुरीषावृतत्त्वोद्ध्वंगतिर्निरन्नस्येति । तत्र वातावृतस्नेहं वातघ्ननिरूहैः पित्तावृतं शीतमधुरास्थापनैः कफावृतं कफघ्नैर्निरूहैराहारावृतं लंघनपाचनैः क्वाथैश्च पुरीषावृतं त्वास्थापनैः शोधकैरुद्ध्वंगतं विरेचननिरूहैरनुलोमयेत् ।

## ऊद्ध्वांगार्तितोदादयो नस्यस्य ९

तथा चोद्ध्वांगावयवेष्वर्तिस्तोदः पीडा गुरुत्वमयोगजाः, तिमिरं जीवशोणितागमश्चातियोगजे शिरोविरेचनस्य व्यापदः । ता-अपि यथायथं चिकित्सेत् । तद्यथा सुखदाभ्यंगेनार्तितोदपीडाः स्वेदनेन गुरुत्वं शीतलोपचारैस्तिमिरं जीवादानञ्च चिकित्सेत् ।

## शिरोऽभितापादयो विस्रावणस्य १०

तत्र शिरोऽभिसन्तापोऽन्धता, अधिमन्थः, तिमिरं, धातुक्षयः, आक्षेपः, पक्षाघातः एकांगविकारः, तृष्णा, दाहः, हिक्का, कासः श्वासः पाण्डुता मरणञ्चापि व्यापदो रक्तविस्रावस्येति । ता अपि यथायथं तर्पणादिभिरुपचरेच्छीतलोपचारैश्च । तत्र मरणञ्चेद्भावि तदपि रक्तदानेन रक्षेद्यथाशक्तिः ।

## शूलादयो ह्युत्तरवस्तेः ११

तत्र शूलं, पाण्डुताः स्तम्भः जाड्यं, मान्द्यं, क्षोभः उत्क्लेशः आशुमूत्रप्रवृत्तिरुत्तरवस्तेर्व्यापदः इति यथायथं ता अपि भिषक् चिकित्सेत् । तद्यथा शूलस्तम्भजाड्यमांद्यक्षोभोत्क्लेशान्स्वेदनेन, पाण्डुत्वं स्वेदनेन, आशुमूत्रप्रवृत्तिं शीतलोपचारशीतलवस्तिभिश्चेति ।

## सर्वव्यापत्कारणानि पित्तप्रकोदीनि १२

तत्र सर्वव्यापत्कारणान्मुच्यन्ते, तद्यथा पित्तप्रकोपाद्भ्रमादयः स्वेदनस्य व्यापदः । वहुदोषेऽल्पौषधमानाहमनिःसरणाच्छनैः शनैर्निःसरणात्स्रावं वेगावरोधाद्धृद्गात्रग्रहं नाम नानाकष्टानि, दोषाञ्चोत्क्लेश्य तथा चानिःसार्य स्वयमेवौषधं वहिरागतं कण्ड्वादिकारकं विभ्रंशं, स्निग्धमृदुकोष्ठेऽल्पौषधंदोषानवरोध्यवलमं नाम गौरवं, रूक्षदुर्वलेन्द्रियश्चेद्रूक्षौषधं पिवति, तेन वायुरुपद्रवाञ्जनयति । अति तीव्रौषधमतिशोधनाद्दौर्वल्यात्स्तम्भं, तथौष्ण्या-

त्परिकर्तिकां वेगबाहुल्येन जीवरक्तागमनं जनयतीति वमन-विरेचनयोर्व्यापदः। तथा च निरूहोऽल्पप्रयुक्तोऽशोधनाद्विवन्धं नामायोगं क्लमं नाम गौरवमाध्मानं-वेगावरोधाच्च, प्रकुपित वायुः शिर-पीडां वस्तेरूर्ध्वगतिञ्च जनयति। महादोषेऽल्पौषधं प्रवाहिकामल्पशोधनादशोधनाद्वेति। तथाचातियोगादतिसरणाद्दौर्वल्याद्गात्र पीडां तथा चात्युष्णतयाऽतियोगं नाम कुक्षिशूलं तैक्ष्ण्यात्परिकर्तिकां, पित्तलस्य तैक्ष्ण्याद्रक्तपित्तस्रावं, वायुप्रवेशाद्धृत्पीडां हिक्काञ्च जनयतीति निरूहव्यापदः। तथा च वाताधिक्ये शीताल्पस्नेहो वातावृतत्वान्नानाशूलं, पित्ताधिक्येऽत्युष्णतीक्ष्णस्नेहः पित्तावृतत्वाद्दाहादिकं, तथैव कफावृतत्त्वान्निद्रालस्यादिकं, तथाहारावृतत्त्वादरुचिग्लानिमूर्च्छादिकमतिभोजनादिति, मलाधिक्याच्चाल्पस्नेहः, पुरीषावृतत्वाद्वेगावरोधम्। अभोजनादूर्ध्वगतिरेव रिक्तकोष्ठत्वात्तस्मादरुचिकासादिकं जनयतीत्यनुवासनव्यापदः। नस्यव्यापदो यथाल्पनस्यौषधंदोषानुत्क्लेश्यानिःसार्य चार्तिं नाम वैकल्यं, तोदं, पीडां, गुरुत्वं जनयति। तथा चातियोगादतिशोधनाद्रक्तस्रावं तिमि-रञ्च जनयतीति। तथा चातिरक्तविस्रावणाच्छिरोऽभितापादीनि। तथा चोत्तर-वस्तिव्यापदो यथा—चातियोगादतिसारणादाशुमूत्रप्रवृतिरल्पौषधात् पूर्ववच्छूलादिकं जन्यते। तत्र व्यापद्बाहुल्यं दृष्ट्वा षट्कर्माणि न कारयेदिति चेन्न, महादोषेऽनन्यसाध्यत्वात्कारयेदेव किन्तु तत्वविज्ञ एव तथा कारयितुं समर्थ इति न सर्वैः षट्कर्मोपक्रमारम्भः कार्य इति।

इति श्रीजगदीशाचार्यविरचिते षट्कर्मशास्त्रे सप्तमो मयूखः

# अथ अष्टमो मयूखः

## स्नेह्या दीपनीयाः १

तत्र ये खलु स्नेह्या नरास्ते दीपनीयाः ।

## स्वेद्यादयो स्नेह्याः २

अर्थात् सर्वेषु कर्मसु कस्य कर्मणः के रोगिणो योग्याः केऽयोग्याश्चेति विचार्यते । तत्र खलु पूर्वं स्नेह्याः कथ्यन्ते । ये खलु स्वेदनयोग्याः, ये खलु शोधनार्हाः, ये खलु रूक्षाः, ये खलु वातपीडिताः, ये च नित्यं व्यायामं कुर्वन्ति, ये च नित्यं मद्यं सेवन्ते, ये नित्यं मैथुनरतास्तथा च ये चिन्तकाः बौद्धिककार्यकारिणस्ते स्नेह्या इति ।

## रूक्षणीयादयोऽस्नेह्याः ३

तत्र ये खलु रूक्षणीयाः ये च प्रवृद्धकफमेदसः न ते स्नेह्याः पाण्डुत्वादि-भयात् ।

## प्रतिश्यायादिरोगार्ताः स्वेद्याः ४

साम्प्रतं स्वेद्या उच्यत्ते । प्रतिश्याय, कास, हिक्का, श्वास, लाघव, कर्णमन्या शिरःशूल, स्वरभेदगलग्रह, सर्ववातरोग आनाहः, विवन्धः शुक्राघातः, विजृम्भकः, मूत्रकृच्छ्रं, गौरवं, मुष्कशोथः, अंगमर्दः, अंगार्तिः अंगग्रहः, खल्लः, आमः, शीतं वेपथुः वातकण्टकः संकोचः आमशूलं, स्तम्भः गौरवं, प्रसुप्ति-रित्यादिरोगाक्रान्ताः स्वेद्याः इति ।

## एभ्योन्ये कषायनित्यादयोऽस्वेद्याः ५

उपर्युक्तेभ्योन्ये विशेषतः कषायमद्य-नित्यसेविनः गर्भिणी, रक्तपित्ती, पित्ती, अतिसारी, रूक्षाः, मधुमेही, विदग्धः भ्रष्टव्रध्नः विषमद्यविकारी, श्रान्तः, विसंज्ञः स्थूलः, पित्तमेही, तृषितः, क्षुधितः, क्रुद्धः शोकान्वितः कामलार्तः उदरी क्षती, दुर्बलः अतिशोधितः क्षीणौजाः तैमिरिकः इत्याद-योऽस्वेद्याः ।

## पीनसादिरोगार्ताः वाम्याः ६

पीनस नवज्वर राजयक्ष्म, कासश्वास, गलग्रह गलगण्ड श्लीपद, मेह, मन्दाग्नि, विरुद्धाजीर्णानि, विशूचिकालसक, विष, गरपीत दष्ट, दग्ध, विद्ध, अधःशोणितपित्त, प्रसेक दुर्नाम, हृल्लासारोचकाः, विपाक अपची, अपस्मार, उन्माद अतिसार शोष, पाण्डु, मुखपाक, दुष्टस्तन्यादयः कफव्याधयो विशेषेण महारोगाध्यायोक्ताश्च यथाचरकं वाम्याः ।

## क्षतक्षीणादयोऽवाम्याः ७

तत्र ये खलु क्षतक्षीणादयो रोगिणस्तेऽवाम्याः सन्तीति, तद्यथा क्षतक्षीणातिस्थूल, कृश वालवृद्ध दुर्बल, भ्रान्त, पिपासित, क्षुधित कर्मभाराध्वहतोपवासी, मैथुनरताध्ययनशील व्यायामी चिन्ताप्रसक्त क्षाम गर्भिणी सुकुमार संवृतकोष्ठ दुश्छर्दितोर्ध्वरक्तपित्तप्रसक्तच्छर्दिरूर्ध्ववातास्थापितानुवासित हृद्रोगावर्तमूत्राघातप्लीहगुल्मोदरष्ठीलास्वरोपघात तिमिर शिरः शंखकर्णाक्षि पार्श्वशूलार्ता इति । तत्र क्षतादीनां रक्तातिप्रवृत्यादि दोषाः वमनाज्जायन्ते ते तु महासंहितासु विस्तरेण दृष्टव्याः ।

## कुष्ठज्वरार्तादयो विरेच्याः ८

तत्र कुष्ठज्वर मेहोर्ध्वरक्तपित्त भगन्दरोदरार्शोब्रघ्न प्लीह गुल्मार्वुद गलगण्ड ग्रन्थि विशूचिकालसक मूत्राघात कृमिकोष्ठ विसर्प पाण्डुरोग शिरः पार्श्वशूलोदरावर्त नेत्रास्यदाह हृद्रोगव्यंग नीलिका नेत्रनासिकाऽऽस्यश्रवणरोग गुदमेढ्रपाक हलीमक श्वासकास कामलाऽपच्यपस्मारोन्मादवातरक्तयोनिरेतोदोषतिमिरारोचकाविपाकच्छर्दिश्वयथुज्वरविस्फोटादयः पित्तव्याधयो विशेषेण महारोगाध्यायोक्ताश्च व्याधयो येषु विरेचनं कर्तव्यम् ।

## सुभगादयोऽविरेच्याः ९

तत्र सुभग, क्षतगुद, मुक्तनालाधोभागरक्तपित्त-विलंघित दुर्वलेन्द्रियाल्पाग्नि, निरूढकामादिव्यग्राजीर्ण नवज्वर मदात्ययिताऽध्मातशल्यार्दिताभिहतातिस्निग्धरुक्षदारुणकोष्ठास्तथा चावाम्यानां क्षतादारभ्यगर्भिणी पर्यन्ताश्च न विरेच्या इति ।

## सर्वांगरोगार्तादयस्त्वास्थाप्याः १०

तथा च सर्वांगैकांगकुष्ठरोगवातवर्चो मूत्रशुक्रसंगबलवर्ण मांसरेतःक्षयदोषाध्मानाङ्गाशुद्धि कृमिकोष्ठोदावर्तस्तब्धांगातिसार सर्वाङ्गाभितापप्लीह गुल्महृद्रोग भगन्दरोन्माद ज्वर ब्रघ्न शिरोग्रहादिवेपनाक्षेपक गौरवातिलाघव

रजोदोष मन्दाग्नि विषमाग्नि सर्वशूलशोथस्तम्भांत्रकूजन परिकर्तिका वात-व्याधयो विशेषेण महारोगाध्यायोक्ताश्च रोगाः सन्ति येषु आस्थापनं कर्त्तव्यम् ।

## अजीर्ण्यादयोऽनास्थाप्याः ११

तत्र, अजीर्णी, अतिस्निग्धः, पीतस्नेहः, उत्क्लिष्टकफः, अल्पाग्निः, दुर्बलः, यानक्लान्तः, क्षुत्तृष्णाश्रमार्तातिकृश, भुक्तभक्त, पीतोदक वमित, विरिक्तनस्तक्रुद्ध, भीत, मत्त, मूर्च्छित प्रसक्तच्छर्दि निष्ठीविकाश्वास कास हिक्काबद्धच्छिद्र जलोदराध्मानालसक विसूचिकाऽप्रजातातिसार मधुमेह कुष्ठार्ताश्च रोगिणोऽनास्थाप्याः ।

## आस्थाप्या रूक्षादयश्चानुवास्याः १२

तथा च ये पूर्वोक्ताः आस्थाप्या विशेषतो रूक्ष, तीक्ष्णाग्नयः केवल वातरोगार्ताश्च ते तैलवस्तियोग्याः भवन्ति ।

## अनास्थाप्या अभुक्तभक्ताश्च नानुवास्याः १३

तत्र ये खलु पूर्वोक्ता अनास्थाप्याः तथा च ये अभुक्तभक्ताः नवज्वर पाण्डु प्रमेह कामलार्शः प्रतिश्यायारोचक मन्दाग्निदुर्बल प्लीह कफोदरोरुस्तम्भ बर्चोभेद पीतविष कृमिकोष्ठिनश्च तेऽपि नानुवास्याः ।

## अजीर्ण्यादयोऽशिरो विरेच्याः १४

तत्र अजीर्णी, भुक्तभक्त, पीत स्नेह, मद्य तोयपानेच्छु स्नातशिरः स्नातुकाम क्षुत्तृष्णाश्रमार्तमत्त मूर्छित शस्त्रदण्डाहत व्यवायव्यायाम यानक्लान्त नवज्वर शोकाभितप्त विरिक्तानुवासित गर्भिणी नवप्रतिश्यायार्ताः दुर्दिने विरुद्धर्तौ, च न शिरोविरेच्या इति ।

## शेषाः शिरोग्रहार्त्ताश्च शिरोविरेच्याः १५

तत्र येऽविरेच्येभ्योऽन्ये तथा च शिरोदन्तमन्यास्तम्भहनुग्रहपीनस-गल-शुण्डिकाशालूक तिमिर वर्त्मरोग व्यंगोपजिह्विकार्द्धावभेदकग्रीवा स्कन्धास्य नासिका कर्णाक्षिमूर्धकपाल शिरोरोगार्दितापतंत्रकापतानकगलगण्ड दन्तशूल-हर्षचालाक्षिरोग, नाड्यर्वुद स्वरभेदवाक्यग्रह गदगदकथनादय, ऊर्ध्वजत्रुगता-वातविकाराः तेष्वपि शिरोविरेचनं कर्तव्यम् ।

प्रजननसंस्थानरोगार्ता उत्तरानुवास्याश्च १६

तत्र ये खलु प्रजननसंस्थानरोगार्ताः, मूत्रविकारिणो योनिविकारिणस्तेऽनुवास्या उत्तरवस्तिभिः। चकारादास्थाप्याश्च यथावश्यकतेति।

नान्ये १७

प्रजननसंस्थानरोगार्त्तेभ्योऽन्ये, नेति। अर्थादनुत्तरानुवास्या अनुत्तरास्थाप्या इति।

रक्तजेषु विस्रावणम् १८

ये खलु रक्तजाः विकारास्तेषु शोणितविस्रावणं कर्तव्यम्।

नान्ये सर्वांगशोफार्तादयः १९

न त्वन्ये। तथा च ये सर्वाङ्गशोफार्तक्षीण पाण्डुप्रदरार्शः शोष रोगार्तास्तेऽपि न विस्राव्याः। इति।

इति श्रीजगदीशाचार्यविरचिते षट्कर्मशास्त्रे अष्टमो मयूखः

# अथ नवमो मयूखः

द्विधं दीपनपाचनं बाह्यमाभ्यन्तरम् १

तत्र दीपनपाचनं द्विधं भवति। वाह्यम्, आभ्यरन्तरञ्च।

व्यायामो बाह्यम् २

तत्र व्यायामो, धावनमासनादि वाह्यं दीपनपाचनम्।

त्रिविधमाभ्यन्तरम् ३

अभ्यन्तरं खलु त्रिविधं क्षारो, लवणं पित्तकृदिति।

तत्र स्नेहाः द्विविधाः स्थावरजंगमाः ४

तत्र स्नेहविषयो विशेषेण वर्ण्यते। द्विधाः खलु स्नेहाः भवन्ति स्थावराः, जंगमाश्चेति। स्थावरेभ्यो जातास्ते स्थावराः। जंगमेभ्यो जातास्ते जंगमा इत्युच्यन्ते।

## तिलादीनां तैलानि स्थावराः ५

तत्र तिलादीनां वनस्पतीनां तैलानि स्थावराः स्नेहाः भवन्ति । तद्यथा तिलपियालाभिषुक्तविभीतक-चित्राभयैरण्डफलमधूकसर्षपकुसुम्भविल्वारुकमूल-कातसीनिकोचाक्षोडकरञ्जशिग्रुचन्दनधूपादयो वनस्पतयस्तैलयोनयः ।

## गवादीनां घृतादीनि जंगमाः ६

गो, महिषाजाविपशूनां घृतानि दुग्धानि दधीनि नवनीतानि, वसा, मज्जामांसानि जंगमाः स्नेहाः ।

## वीजादीन्याश्रयास्तैलानाम् ७

तत्र सन्ति वा, आश्रयाः येषु तैलानि तिष्ठन्ति । तद्यथा वीजानि त्वचः काष्ठानि-मूलानि पत्राणि पुष्पाणि फलानि निर्यासाश्च तैलाश्रयाः । नेह तद्विस्तरावश्यकतेति ।

## स्नेहने तैलघृतवसामज्जानः प्रावृडादिषु ८

तत्र खलु स्नेहनकर्मणि तु तिलोद्भवं तैलं घृतं वसा मज्जा च प्रयोज्यानि भवन्ति । तत्रापि तैलं तु वर्षायामृतौ, घृतं शरदि, वसा मज्जानौ माधवमासे पेयौ ।

## ते च वातपित्तकफजेषु ९

ते च स्नेहाः क्रमशो, वाते तैलं, पित्तेघृतं कफजेषु विकारेषु तु प्रतुद-विष्किराणां वसामज्जानौ प्रयोगार्हाः इति । प्रतुद्य भूमिं चञ्च्वा ये भक्षयन्ति ते प्रतुदाः कपोतपारावतादयः । नखैर्विकीर्य ये भक्षयन्ति ते विष्किराः लावादयः पक्षिणः ।

## सर्पिर्वा श्रेष्ठतमं संस्कारस्यानुवर्तनात १०

अथापि घृतमेव प्रयोजयेत् सर्वदोषेषु । किं कारणम् ? श्रेष्ठतमं वै भवति सर्वेभ्यो यस्मात् । किं कारणम् ? उच्यते, यतो हि संस्कृतञ्चे-दौषधैस्तदा स्वगुणानपरित्यजदौषधानां गुणानपि गृह्णाति । ततो संस्कारैः प्राप्तगुणैर्बहुगुणवद्भवति घृतम् । वातघ्नाद्यौषधैः सिद्धं तत्तद्दोषजेषु विकारेषु भवति प्रयोगार्हमिति ।

## पुनरप्यत्युल्वणेषु स स एव ११

पुनरपि सत्यपि घृते श्रेष्ठतमेऽत्युल्वणश्चेद्वातस्तैलमेव स्नेहोदेयः । कफश्चेदत्युल्वणोवसामज्जानावेव, प्रतुदविष्किराणां पक्षिणाम् ।

## तत्तद्दोषघ्नसिद्धा वा सर्वे यथायथम् १२

अथवा वातघ्नौषधैः सिद्धं तैलं वा घृतं वा वसामज्जानौ सर्वे स्नेहाः ॰ोगार्हाः। तथैव पित्तश्लेष्मजेष्वपि तत्तद्दोषघ्नैरौषधैः सिद्धाः सर्वस्नेहाश्चज्ञेयाः। तत्र ग्राम्यानूपौदकानाञ्च वसामज्जानौ वातघ्नौ। जाङ्गलैकशफक्रव्यादीनां तु पित्तघ्नौ। प्रतुदविष्किराणां तु कफघ्नौ एतावपि पधसंस्कारैर्यथायथं विपरिणमयितव्यौ।

## अनुष्णाशीते च १३

तथा चानुष्णाशीते काल एव देयो नात्युष्णशीते।

## अत्युष्णे वातपित्ताधिके रात्रौ, श्लेष्माधिके शीते दिने निर्मलाकाशे च १४

अत्युष्णश्चेत्कालो वातपित्ताधिक्यञ्च रोगिणि तदा रात्रावेव। श्लेष्माधिक्यञ्चेच्छैत्यञ्च तदा दिन एव। यदा चैवाकाशः निर्मलः स्यात् तदैव स्नेहपानं कारयेत् न तु दुर्दिने, तदा सूर्यचन्द्रप्रदीयमानशक्तेरलाभात्।

## अत्युष्णे दिवापानेन मूर्च्छादयः १५

अत्युष्णकाले दिने स्नेहपानेन मूर्च्छा, पिपासा, उन्मादः कामलादयो जायन्ते। अनर्थाय च ते भवन्ति महते।

## शीते रात्रौचेदानाहारुचिशूलपाण्डुताः १६

शीतकाले रात्रौ चेत्पीयते तदानाहोऽरुचिः शूलं पाण्डुतादयो जायन्ते।

## यूषं कोष्णाम्बुपेयामण्डादि चानु १७

तथा च तैलस्यानु यूषः पेयः। घृतस्यानु कोष्णंजलं, वसामज्जनोरनु पेयामण्डौ पेयौस्तः।

## कोष्णाम्बु वाऽसकृत १८

अथवा सर्वेषां स्नेहानामनुपानं कोष्णाम्ब्वेव साधु। तच्च मुहुर्मुहुर्देयं यावज्जीर्णतां न याति स्नेहः।

## तुबरकभल्लातकयोः शीतमेव १९

किन्तु तुबरकतैलस्य भल्लातकतैलस्य चानुपानं शीतलमेव जलं भवति। तयोस्तैक्ष्ण्यौष्ण्यप्रशान्तये।

## तीक्ष्णमध्यमन्दाग्नीनां प्रधानमध्यह्रस्वमात्राश्चतुर्विंशतिद्वादश-षड्ढोरासुजीर्णाश्चेत् २०

पुनः खलु स्नेहस्य तिस्रो मात्रा भवन्ति प्रधाना, मध्या, ह्रस्वा चेति। तत्र प्रधाना मात्रा तीक्ष्णाग्नये दीयते। मध्यातु मध्यवलाग्नये दीयते। ह्रस्वा मात्रा मन्दाग्नये प्रदीयते। तत्र या मात्रा षड्ढोरासु दिनार्धे पचति सा ह्रस्वोच्यते। या तु दिनमात्रे द्वादशहोरासु पचति सा मध्योच्यते। या खल्वहोरात्रे चतुर्विंशतिहोरासु पचति। बहुमात्रात्वात्, किन्तु न विरेचयति सा प्रधानमात्रोच्यते। तत्र ह्रस्वमध्यप्रधानमात्रासु क्रमश-उत्तरोत्तरं स्नेहोऽधिको भवति।

## तत्र पलसपादार्द्धार्द्धपलानि मात्राः २१

तत्र प्रधानमात्रा पलमिति (४ तो०) मध्यातु सपादार्द्धपलमिति (३ तो०) ह्रस्वा मात्रा, तु पलार्द्धमिति (२ तो०) ज्ञेया। ततः शनैः शनैरन्वहं वर्धयेदाद्विगुणमिति।

## ह्रस्वा प्रशस्ता स्नेहनबृंहणकरत्वात् २२

तासु या ह्रस्वामात्रा सा प्रशस्यते। किं कारणम्? सम्यक्स्नेहन-करत्वाद्बृंहणत्वाच्चेति शनैः शनैः।

## मृदुमध्यक्रूरकोष्ठेभ्यस्त्रिपञ्चसप्तदिनानि २३

तत्र मृदुकोष्ठाय दिनत्रयं यावत्। मध्यकोष्ठाय पंचदिनानि यावत्। क्रूर कोष्ठाय तु सप्तदिनानि यावत्स्नेहप्रदानं सम्यक्स्निग्धत्वाय भवति।

## द्विविधञ्च तदाभ्यन्तरं वाह्यञ्च २४

द्विविधञ्च तत्स्नेहनं कर्म भवति। आभ्यन्तरं वाह्यञ्च यश्चाभ्यन्तर-प्रयोगस्तदाभ्यन्तरम्। यश्च वाह्यप्रयोगस्तद्वाह्यम्। इति स्नेहनस्य द्वौ विधी भवतः।

## तत्राच्छपेयविचारणेचाद्यम् २५

तत्र चाद्यविधिरपि द्विधः। अच्छपेयो विचारणाचेति।

## लेपाभ्यंगोद्वर्तनानि वाह्यविधयः २६

तत्र लेपोऽभ्यङ्ग उद्वर्तनं वाह्यस्नेहनविधयः। यदातु स्नेहोलेप्यते केवलं शरीरे स लेपः। यदा तु करपीडनेनाभ्यज्यते शरीरं स्नेहेनसोऽभ्यङ्ग उच्यते। यदा खलु प्रतिलोमविधिनाऽधोभागादूर्द्ध्वभागमभि, करतलपीडनेनाभ्यज्यते तदुद्वर्तनमुच्यते। वाह्यमेतत्स्नेहनम्।

## पादाघातश्चतुर्थः केरलीयाः २७

तत्र व्यामादिभिरतिसुदृढ़कठोरदेहेषु तु पादाघातैरेवाभ्यङ्गश्चतुर्थो विधिरिति केरलीयाः वैद्याः। पादैराहत्य आहत्याभ्यज्यते यस्मिन विधौ स पादाघातः।

## स्नेहमात्रपानमच्छपेयः २८

तत्र स्नेहमात्रपानमच्छपेयमुच्यते। बहुमात्रास्नेहपानमित्येकेषां मतम्। तन्नोचितं बहुमात्रापानं चेन्न पचति। विरेचयति। न विरेचयति चेत्सा, प्रधाना मात्रेत्युच्यते। बहुमात्रापानत्त्वे तु न विचारणया द्वन्द्वत्त्वं सिद्धयति। मात्रातु कापि स्यादग्निबलानुसारेण। बहुमात्रापानमेव चेदच्छपेयं तदाह्रस्वमध्यमात्रापानं नाऽच्छपेये सिद्धयेत्। न चेत्तदा तयोः कथमच्छपेयत्वविचारणयोर्द्वयोः परस्परं द्वन्द्वत्वम्। नन्वल्पमात्रा विचारणेति तेषां मतमिति चेन्न, अल्पमात्रा तु ह्रस्वा मात्रोच्यत एव। तथा चौदनविलेप्यादयश्चतुर्विंशति विचारणानां कल्पना त्वेतदर्थमेव कृता यया बहुविधैः स्नेहद्विषोऽपि येनकेन प्रकारेण सम्यक्स्निग्धा भवन्तु। तथा च न क्वचिदपि ह्यच्छशब्दः प्रभूतार्थे प्रयुक्तो विद्यते प्रयुज्यते वा। अच्छः स्वच्छो वा कैवल्यार्थे एव प्रयुक्तः, प्रयुज्यते च। शब्दोऽयं प्रयुज्यते चान्यदोषराहित्यार्थेऽपि। यद्यथा अच्छजलं स्वच्छजलमिति। न तु बहुत्वार्थे। तत्र यः खलु न स्नेहंद्वेष्टि तस्मै केवल स्नेह एव पानार्थं प्रदीयते। यः खलु द्वेष्टि न पिवति, वमति वा पीतं, तस्मै तु भक्तादिभिर्दत्वा येन केनाऽपि विधिना स्नेहनं साध्यते कयाऽपि मात्रया। शक्याश्च मृदुमध्य क्रूर कोष्ठानांकृते ह्रस्वमध्यप्रधानमात्राः यथायथमुभयथाऽपि प्रयोक्तुं विचारणया, अच्छपेयेनवेति। न तत्र बहुत्वस्याल्पत्वस्य वा प्रश्न इत्यलम्।

## ओदनादिभिर्ग्रहणं विचारणा २९

तत्रोदनादिभिर्योगेन स्नेहस्य ग्रहणं विचारणोच्यते स्नेहद्विषोऽपि गृहीत्वा तैः सम्यक्स्निग्धाः भवन्ति।

## ताश्चतुर्विंशतिसंख्यकाओदनादयः ३०

ताः खलु विचारणाश्चतुर्विंशतिसंख्यकाः सन्तीति। तद्यथा ओदन-विलेपीरसमांसदुग्धदधियवागू सूपशाक यूषकाम्बलिकखडसक्तु तिलपिष्टमद्य-लेह भक्ष्यगण्डूष वस्ति नस्योत्तरवस्ति कर्णाक्षि तर्पणाञ्जनानि।

## स्नेहद्विडादिभ्यस्ताः ३१

ताः खलु विचारणाः स्नेहद्विड्भ्यः। सुखेन गृह्णन्ति ते यतः। स्नेहनित्याय च। बहुमात्रामादत्ते यतः। मृदुकोष्ठाय च, न विरेचयति यतः। क्लेशासहाय च। अक्लेशं गृह्णाति प्रसन्नमनसा। मद्यनित्याय च, बहुरौक्ष्याद्बहुमात्रामादत्ते यत इति क्रियन्ते।

## अत्यल्पप्रभूतमात्रे त्याज्ये ३२

तथा चात्यल्पमात्रा त्याज्या स्नेहस्य। किं कारणं? न सा स्नेहयति यतः। अतिप्रभूतमात्राऽपि च वर्जनीया। यतो हि सा स्निग्ध-त्वसम्पादनेन विनैवाधः स्रवति। तद्यथा वेगेनाशु बहुजलमपि प्रक्षिप्तं सदक्लेद्यैवलोष्ठं प्रवहत्यधः। न हितं कुरुते सा प्रभूतमात्रा।

## आशुस्नेहनकरश्च सलवणः ३३

यः खलु स्नेहो लवणेन सह पीयतेऽर्थात्स्नेहे लवणं प्रक्षिप्य पीयते स आशुस्नेहनं सम्पादयति। किं कारणम्? उच्यते, सूक्ष्मत्वेन, व्यवायि-त्वेन, अरूक्षत्वेन, दोषोच्छेदकत्वेन चेति। भवति हि लवणं, सूक्ष्मं, व्यवायि अरूक्षं दोषोच्छेदकञ्चेति। सद्यस्नेहनकरणाय सलवणस्नेहोदेयः।

## सगंधमजीर्णं विद्यात् ३४

तत्र पीतः स्नेहो जीर्णमजीर्णं वेति परिज्ञानायोच्यते सगंधमुद्गारम-जीर्णं विद्यात्।

## निर्गन्धं जीर्णमिति ३५

निर्गन्धश्चेदुद्गारः पीतस्य, तदा जीर्णं विद्यात्।

## स्नेहप्रदीप्ताग्नये शीताम्बु, मृत्युर्वा ३६

यदा तु स्नेहनेनात्यन्तप्रदीप्ताग्निर्जायते तदा महती पिपासा जायते दाहश्च महान् जायते तत्र गुरुनमान्नमपि न क्षममपितु शीतलाम्बु एव क्षमं भवति शान्तये। मृत्युर्वा भवति दाहपिपासातिशयेन।

## सर्पिरपि नासंस्कृतं दद्यात् ३७

ननु स्नेहं संस्कृतमसंस्कृतं वा किं दद्यादित्याकाँक्षायामुच्यते, तैलानां का वार्ता सर्पिरपि न कदापि दद्यादसंस्कृतम् । आममुत्पादयति ।

## उष्णीकृतं संस्कृतमेव ३८

अग्नावुष्णीकृतमपि घृतं संस्कृतमेव भवति । अग्निसंस्कृतमेव तद्भवति । आमदोषहानेः । अथवा नवनीतं सम्यगुष्णीकृत्यैव घृतं साध्यते तत्तु स्वभावत एवाग्निसंस्कृतं भवति । तस्माच्छीतमपिघनं घृतं न दोषाय भवति । तस्मादेवोष्णमनुष्णमपि द्विधमपि प्रयुज्यते लोकैरशनादौ । तथापि शीघ्रजीर्णतायै तूष्णीकृत्यैव पुनः संस्कृत्यैव पाययेत् । तैलन्तु न तथा भवति तिलेभ्योऽसंस्कृतमेव जायते । तस्मान्नासंस्कृतं दातुं शक्यमित्यलम् ।

## तदपि न केवले सामे वा पित्ते मारणात् ३९

संस्कृतमपि सपिर्न तु केवले पित्तेदेयम् ? किं कारणम् ? आहुतिरिव वर्धयति तमिति सामे पित्ते तु कदापि न देयमिति विशेषः किं कारणम् ? हविषाकृष्णवर्त्मेव भूय एवाभिवर्धते । यथा ज्वालासु प्रक्षिप्तं घृतंभूय एव वर्धयति तास्तथैव सामपित्तं बहुप्रकोपमापद्यते दाहञ्चोत्पाद्य मारयति । केवले पित्ते तु विचारणयैव । अर्थाच्छीतलान्नपानैः सहैवदेयं न तु अच्छरुपेण ।

## यमकस्त्रिवृन्महांश्चयोगैः ४०

तत्र द्वौ स्नेहौ घृततैले, त्रयोघृततैलवसाश्चत्वारो घृततैलवसामज्जानश्चेद्योगेन परस्परमेकस्मिन्मिश्रिता दीयन्ते ते क्रमशो यमकः त्रिवृत् महानित्युच्यन्ते ।

इति श्रीजदीशाचार्यविरचिते षट्कर्मशास्त्रे नवमो मयूखः

त
य: सोऽग्नि-
स्वेद: ।

त
ोध:, आह्वं,
आतप:
पोपनाहक्षुधा-
श्चिकित्स
प्रसङ्गत एव
न तु तैः
कमपिरोगिणं
भापयति
भिरपि भवति
स्वेदागम
येर्नोपदशस्य ।
चिकित्सा
ुज्यन्ते न तु
स्वेदनार्थ

ते
एव क्रियन्ते ।
सुखस्वेदन
ष्मयो: । न
तु पित्ते ।

तत्र
वेद:, उपनाह-
स्वेद:, द्रव

## प्रस्तर संकरौ तापस्वेदौ ५

तत्र य: प्रस्तरे शाययित्वा क्रियते, यश्च संकराख्य: पाषाणादिपिण्ड-स्वेद: सोऽपि तापस्वेद: । स तु वस्त्रान्तरितैरवस्त्रान्तरितैर्वा, उष्णीकृतैः पाषाणादिपिण्डैः सम्पाद्यते ।

# अथ दशमो मयूखः

## स्वेदनं द्विविधमग्न्यनग्निभेदेन १

तत्र स्वेदनं खल्वपि द्विविधं भवति। अग्निसाहाय्येन यः सोऽग्निस्वेदः। विनाग्निं यः सम्पाद्यते सोऽनग्निस्वेद इति।

## तत्र व्यायामादयो दशानग्निस्वेदाः २

तत्र खलु व्यायामः उष्णगृहं, गुरुप्रावरणं, क्षुधा, भयं, क्रोधः, आहवं, आतपः बहुपानोपनाहश्चेति। तत्र व्यायामोष्णगृहप्रावरणातपोपनाहक्षुधाश्चिकित्सोपक्रमाः न त्वन्ये। भयक्रोधाहवबहुपानानि तूक्तानि प्रसङ्गत एव न तु तैः स्वेदनचिकित्सालाभः। न हि कोपि वैद्यः स्वेदनार्थं कमपिरोगिणं भापयति क्रोधयति युद्धे वा योजयति युद्धचस्वेति। किन्त्वेभिरपि भवति स्वेदागम इत्येवाभिप्रायः। स्वभाव एवाचार्य्याणां कात्स्न्येर्नोपदशस्य। चिकित्सार्थमुन्मादकामज्वरोरूस्तम्भादिषु भयक्रोधाहवादयः प्रयुज्यन्ते न तु स्वेदनार्थम्।

## ते सुकुमारेषु पित्त एव ३

ते च व्यायामादय उपक्रमाः सुकुमारेषु तेष्वपि पित्त एव क्रियन्ते। सुखस्वेदनार्थम्, अनन्र्थत्वाय चेति। अग्निस्वेदास्तु वातश्लेष्मयोः। न तु पित्ते।

## तापोपनाहद्रवोष्मवाष्पाः पञ्चधोऽन्यः ४

तत्राग्निस्वेद उच्यते। पञ्चविधः स इति तद्यथा तापस्वेदः, उपनाहस्वेदः, द्रवस्वेदः, ऊष्मस्वेदः, वाष्पस्वेद इति।

## प्रस्तर संकरौ तापस्वेदौ ५

तत्र यः प्रस्तरे शाययित्वा क्रियते, यश्च संकराख्यः पाषाणादिपिण्डस्वेदः सोऽपि तापस्वेदः। स तु वस्त्रान्तरितैरवस्त्रान्तरितैर्वा, उष्णीकृतैः पाषाणादिपिण्डैः सम्पाद्यते।

## कफवातयोः शुष्कस्निग्धाभ्याम् ६

तत्र कफजेषु विकारेषु गवादिशकृद्यवसिकतापांशुलौहपाषाणादिशुष्कैः पिण्डैः। वातेतु गोधूमशाल्यन्नादिस्निग्धैः पिण्डैः क्रियते। तथैव तिलादिभिश्चेति।

## उपनाहस्तु विलेपनेन ७

उपनाहस्वेदे तु शाल्यन्नगोधूमपिष्टिप्रभृतीनि पक्वानि स्नेहसाधितानि च स्वेद्याङ्गे विलेप्य वस्त्रेण परिवेष्टय वध्यते। अथवा पूर्वं वस्त्रे विलेप्य ततः स्वेद्याङ्गं परिवेष्टयते वध्यते च दृढम्। अग्निसंसर्गजौष्ण्यात्।

## अवगाहपरिषेकौ द्रवस्वेदौ पित्ते च ८

तत्रोष्णजले सलवणेक्वाथे वा दोषघ्नेऽवगाहो तद्वारैर्वा परिषेको द्रवस्वेदावुच्येते, द्रवैः क्रियते यतः। तौ तु संसृष्टपित्ते कार्यौ वातकफाभ्याम्।

## होलाककूपकुटीकर्षुजेन्ताका ऊष्मस्वेदाः ९

तथा च होलाकस्वेदः, कूपस्वेदः कुटीस्वेदः कर्षुस्वेदो जेन्ताकस्वेदश्चोष्मस्वेदाः। उष्णतामात्रसिद्धत्वात्।

## नाड़ीकुम्भीकाश्मघनभुवो वाष्पस्वेदाः १०

तत्र नाड़ीस्वेदः कुम्भीकस्वेदोऽश्मघनस्वेदो भूस्वेदश्च वाष्पस्वेदाः। वाष्पमात्रसिद्धत्वात्।

## इतिचतुर्दशाग्निस्वेदाः वातकफयोः ११

इति चतुर्दशस्वेदा अग्निस्वेदाः विज्ञेयाः इति। वातविकारेषु कफविकारेषु च कार्य्याः।

## सर्वांगैकांगौ क्षेत्रभेदेन १२

तत्र क्षेत्र भेदेनाऽपि द्विविधौ स्वेदौ। सर्वाङ्गस्वेद एकाङ्गस्वेद इति। तद्यथावगाहः सर्वाङ्गस्वेदः पाषाणपिण्डैरेकाङ्गस्वेद इति तथैवान्येऽपि ज्ञेयाः।

## रुक्षस्निग्धो च पुनः कफवातयोः १३

पुनश्चद्विधः स्वेदः। रूक्षस्वेदो यथा पाषाणसिकतादिभिः। स्निग्धश्च स्वेदो यथा प्रस्तरावगाहादयो हि स्निग्धानामेव। तत्र रूक्षः कफे, स्निग्धस्तु वाते हितो भवति। द्वन्द्वे मिश्रितः।

## अन्यस्थानिनं तु प्राकृतं प्रतिकृत्यैव १४

तत्र द्वन्द्वे नियम उच्यते। यत्रान्यस्थानीदोषस्तत्र प्राकृतं दोषं प्रतिकृत्यैव तं प्रतिकारयेत्। वातकफयोरेव स्वेदा उक्ताः। तत्रामाशयस्तु कफस्थानं तत्र चेद्वातोपसर्गस्तदा पूर्वं प्राकृतं कफं रूक्षस्वेदनेन प्रतिकृत्यैव वातं स्निग्धस्वेदनेन प्रतिकारयेदिति। तथैव पक्वाशयगते कफे पूर्वं प्राकृतं वातदोषमेव स्निग्धस्वेदनेन प्रतिकृत्य रूक्षस्वेदनेन कफं प्रतिकारयेदिति विस्तरः।

## महान्मध्यदुर्वलाश्च वलभेदेन १५

पुनश्च त्रिविधः स्वेदः। वल भेदेन।—महान्स्वेदो मध्यस्वेदो दुर्वलस्वेद इति। यः खलु प्रधानवलो भवति तस्य महान्स्वेदः क्रियते। यः खलुमध्यवलस्तस्य मध्यस्वेदः, यः खल्ववरवलस्तस्य दुर्वलस्वेदः क्रियते। यतो हि दुर्वलमेवावरबलो, मध्यमेव मध्यवलो। महान्तं तु सोढुं शक्नोति प्रधानवल एव। तापकालापेक्षिणः स्वेदनिर्गमापेक्षिणश्चते।

## तत्रापि वृषणदृष्टिहृदयेषु दुर्वल एव १६

तत्रापि वृषणयोः, दृष्टयोः हृदये च साधारणस्वेदः। कोष्णगोधूमपिण्डादिभिर्यः क्रियते सोऽपि दुर्वलस्वेद इति।

## बंक्षणयोर्मध्यः १७

बंक्षणप्रदेशे तु मध्यस्वेदोऽधिकतरतापकालाभ्याम्।

## अन्यत्र महान्यथेष्टं वा १८

अन्यत्र शरीराङ्गेषु शाखापिण्डेषु महान्स्वेदोऽधिकतमतापकालाभ्यां कारयेत्। यथा वेष्टः स्यात्।

## अथ प्रशस्तिः शुष्काण्यपीति १९

अथ प्रशस्तिः क्रियते, यथाचरकम्।

शुष्काण्यपि हि काष्ठानि स्नेहस्वेदोपपादनैः।
नमयन्ति यथान्यायं किं पुनर्जीवितो नरान्॥

इति श्रीजगदीशाचार्यविरचिते षट्कर्मशास्त्रे दशमो मयूखः

# अथैकादशो मयूखः

## तत्र वमनविरेचनं विरेचनमेव १

तत्र वमनं विरेचनमुभयमपि विरेचनसंज्ञकमेव ऊर्द्ध्वाधो विरेचनत्वात्। यत्खलूदानप्रणुन्नमूर्ध्वमार्गेण मुखेन विरेचयति यच्चापानप्रणुन्नमधोद्वारेण गुदेन विरेचयति तदुभयमपि विरेचनमेवोच्यते वुधैः।

## मदनफलादिगणो वमनार्थः २

तत्र मदनफलं जीमूतमिक्ष्वाकुर्धामार्गवं कुटजं कृतवेधनञ्च भेषजगणो वमनार्थो ज्ञेयः। अन्येऽपि वामकौषधयश्चापामार्गतण्डुलीयाध्यायोक्ताः इति।

## त्रिवृदादिगणो विरेचनार्थः ३

श्यामा त्रिवृच्चतुरङ्गुलतिल्वक महावृक्षसप्तलाशङ्खिनी दन्तीद्रवन्ती-भेषजगणस्तदध्यायोक्ताश्चापि विरेचनार्थाः ज्ञेयाः।

## औष्ण्यादिगुणैर्विष्यन्दयन्ति छिन्दन्ति च ४

तानि च भेषजानि ह्युष्णतीक्ष्ण - सूक्ष्मव्यवायिविकाशीनिभवन्ति। तानि स्वव्यवायित्वविकाशित्वगुणाभ्यां हृदयमुपेत्याश्वेव स्थूलसूक्ष्मस्रोतोभ्यः कृत्स्नं शरीरं प्राप्य स्वौष्ण्येन विष्यन्दयन्ति शेषानपि दोषान्। तैक्ष्ण्याच्च छिन्दन्ति तान्।

## अग्निवाय्वात्मकत्वादूर्ध्वम् ५

तत्र यानि खलु भेषजान्यग्निवाय्वात्मकानि यथा मदनफलादीनि तान्यूर्ध्वविरेचयन्ति, वामयन्तीत्यर्थः। लघुत्वात्।

## सलिलपृथिव्यात्मकत्वाच्चाधः ६

तथाच यानि सलिलपृथिव्यात्मकानि तानि गुरुत्वादधो विरेचयन्ति। तद्यथा त्रिवृदादीनि।

## उभयात्मकत्वादुभयथाऽपि ७

यानि खलूभयात्मकानि तान्युभयथोर्ध्वमधश्च विरेचयन्ति। न च तानि हितानि भवन्ति। प्रशस्तानि च न।

## तत्र यष्टिजलादिभिर्वमनं समधुसैंधवम् ८

तत्र खलु यद्वमनद्रव्यं तत्समधुसैंधवं दद्यात् यतो हि मधु श्लेष्माणं छिनत्ति लवणन्तु तं विलयनीकरोति। तथा च पश्चाद्यष्टिजलमपि कोष्णं पाययेदाकण्ठम्। वामकत्त्वेन वमनेऽनुपानं तदिति। अथवा दुग्धमिक्षुरसं वा दद्यादाकण्ठम्। तेन च सम्यग्वेगागमः स्यात्।

## वामयेत्पिप्पलीसर्षपामलकीलवणोष्णोदकैरप्रवृत्तम् ९

यदि चेत्कारणवशादप्रवृत्तंस्याद्वमनं तदा पिप्पलीसर्षपामलक्यादीनि सलवणोष्णोदकैः पुनः पुनः पाययित्वा वामयेद्यावत्सम्यग्वेगाः न स्युः।

## अष्टषट् चत्वारोवेगाः प्रधानमध्यावरशुद्धयः १०

तत्राष्टौवेगाश्चेदागताः प्रधानशुद्धिर्ज्ञेया षट्चेन्मध्यशुद्धिः चत्वारश्चेदवरशुद्धिरिति।

## प्रधानमध्यावरशुद्धिशुद्धाः हीननध्यमहाबलाः ११

तत्र ये खलु प्रधानशुद्धिशुद्धास्ते दौर्बल्याधिक्याद्धीनबलाः ये खलु मध्यशुद्धिशुद्धास्तेऽल्पशक्तिह्रासेन मध्यबलाः ये खल्ववरशुद्धिशुद्धास्तेऽत्यल्पशक्तिक्षयान्महाबलाः भवन्ति। अधिकाधिकवेगागमादधिकाधिकशक्ति संक्षयादिति।

## तत्राष्टषट्चतुर्षु कफपित्तानिल, कफपित्त, कफमात्रागमः १२

तत्र प्रधान शुद्धौ येऽष्टौवेगास्तेषां चत्वारो हि कफवेगाः, द्वौ तु पित्तवेगौ, द्वौ वातवेगौस्तः। इति प्रधानशुद्धिः। यदा तु चतुर्षु कफागमः द्वयोः पित्तं षडेव वेगास्तदा मध्यशुद्धिः। यदा तु चत्वारः कफस्यैव वेगाः न पित्तस्य न चानिलस्य तदावरशुद्धिः ज्ञेयाइति विस्तरः।

## महादोषाणामेव प्रधाना १३

तत्र या प्रधानशुद्धिरूक्ताऽस्ति सा प्रभूतदोषाणामेवोक्ता।

## मध्यदोषाणां षट्स्वेव पित्तानिलागमे १४

मध्यदोषाणान्तु षट्स्वेववेगेषु प्रधानशुद्धिर्विज्ञेया। यदि पित्तानिलागमः स्यात्क्रमशः। तत्र तु त्रिषुवेगेषु कफागमो द्वयोर्वमयोः पित्तमेकस्मिन्नन्तेऽनिलागमः। स्याच्चेत्कफावशेषो, न पित्तागमो नैवाऽनिलागमः

स्यात् । तस्मादित्थं मध्यदोषाणामपि प्रधानशुद्धिः षट्स्वेव । न सा मध्यशुद्धिः ।

## तथैवाल्प दोषाणां चतुर्ष्वेव १५

तथैव द्वौ वेगौ कफस्य, एकः पित्तस्यैको वातस्य साऽपि प्रधानशुद्धिरल्प-दोषाणां चतुर्ष्वेव वेगेषु ज्ञेया । न सा हीनशुद्धिरिति ।

## प्रस्थद्वयैकार्द्धं दोषमात्रा: १६

तत्र वमने निःसृतदोषमात्रा उच्यते । तद्यथा प्रवरशुद्धौ प्रस्थद्वयम् । मध्यशुद्धौ प्रस्थैकम् । अवरशुद्धौ प्रस्थार्द्धम् ।

## तथैव तयोर्मध्यहीनशुद्ध्यपि १७

तथैवमध्याल्पदोषयोर्मध्यहीनशुद्धी च ज्ञेये । तद्यथा त्रिषुवेगेषु कफो द्वयोः पित्तं न चानिलागमः सा मध्यदोषस्य मध्याशुद्धिः । त्रयो वेगाः कफस्यैव तदाहीनशुद्धिर्मध्यदोषस्येति । अल्पदोषाणां द्वयोः कफः एकस्मिन्पित्ते न चानिलागमः सा मध्याशुद्धिः । द्वयोःकफ एव चेत्सा हीन शुद्धिरल्पदोषस्येति विस्तरः ।

## बलान्यपि तथैव १८

तथैव बलान्यपि ज्ञेयानि तेषाम् । तद्यथा मध्यदोषाणां षड्वेगाश्चेत्प्रधानशुद्धिहीनबलं पञ्चवेगाश्चेन्मध्यशुद्धिः मध्यबलञ्च त्रयोवेगाश्चेदवर-शुद्धिः महाबलञ्च ज्ञेयम् । तथैवाल्पदोषाणां खलु चत्वारो वेगाश्चेत्प्रधान-शुद्धिर्हीनबलञ्च, त्रयश्चेन्मध्यशुद्धिर्मध्यबलं, द्वौवेगौ चेदवरशुद्धिर्महाबलञ्च ज्ञेयम्, इति विस्तरः ।

## इति प्रभूत दोषाणां तारतम्येनोपदेशः १९

इति षट्कर्मयोग्यानां प्रभूतदोषदुष्टाणां तारतम्येनोपदेशः कृतो वेदितव्यः इति । अर्थात् महादोषमध्यदोषाल्पदोषाः क्रमात्प्रभूततमप्रभूत-तरप्रभूतदोषदुष्टा इति विज्ञेयाः । नातोऽल्पदोषे लंघनं मध्यदोषे तु दीपन पाचनशमनादिकमित्याभ्यां विरुद्धयति । इति ।

## तापवृद्धिश्च पित्तप्रकोपात् २०

तत्र वमनवेगागमकाले तापवृद्धिश्च भवति । किं कारणं, पित्तप्रकोपात् तद्यथा वमनजश्वासकृच्छ्रतया हृदयगतिवृद्धया रक्तपरिभ्रमणगतिवृद्धयाहि पित्तप्रकोप ऊष्माधिक्यञ्च । तथा च यथा शुद्धिरेव तापवृद्धिरपि ज्ञेया ।

## वमनेषु मदनफलं श्रेष्ठतमम् २१

तत्र वमनद्रव्येषु मदनफलं श्रेष्ठतममुच्यतेऽहानिकरत्वात् ।

## तण्डुलादिभिरूत्क्लिश्य २२

तत्र वमनप्रदानात्पूर्वं तण्डुलपयःपललशाकादिभिः श्लेष्माणमुत्क्लेश्यैव वमनं देयम् । पचत्यन्यथा, न वेगागमः ।

## व्युषितादिकमेव २३

तथाच व्युषितं, रात्रौ सम्यक्सुप्तायेत्यर्थः जीर्णाहारं तथा चाभुक्तं, स्निग्धं, पीता च यवागू येन तं, तथा च पीतघृतञ्च वमनं दद्यात् । अन्यथाऽलाभो हानिर्वाभवति ।

## पूर्वाह्णे च २४

पूर्वाह्णे च काले देयं, न तु मध्याह्ने सायं वा, यतो हि पूर्वाह्णे स्वभावतः कफप्रकोपो जायते सुखेनवेगागमश्च भवति ।

## न तत्पाकं प्रतीक्षेत् २५

तथा वामकद्रव्यस्य पाकं न प्रतीक्षेत । यतो हि वामकद्रव्याणि त्वपक्वान्येव शोधयन्ति । पाके गते न तत्प्रभाव इति । विरेचनस्यैव पच्यमानावस्थायां प्रभावो भवति । तस्मात्पाकं यावन्न प्रतीक्षेत । न चेदाशु वेगागमः पुनरेव देयंवमनमिति ।

## अल्पशुद्धौ जीर्णे चातियोगात् २६

तथा चाल्पशुद्धौ सम्यक्शोधनाय न त्वरितमेव पुनर्देयं वमनम् । अपितु पूर्णतया जीर्णेसत्येव । किं कारणमित्युच्यते, अतियोगो हि जायते यस्मात्तस्मान्नाजीर्णे देयमिति शेषः ।

## अत्यल्पदोषे लंघनमेव २७

अत्यल्पदोषशेषश्चेन्न पुनर्देयम् । लंघनमेव हि कारयेत् । तथैव शुद्धिपूर्त्तिः ।

## अतियोगे मृदु विरेचनमेव २८

अतियोगश्चेज्जातो मृदु विरेचनमेव देयं वामकद्रव्यनिस्सारणाय, न तु वमनम् । यतो हि न वमनाद्वमनं निस्सरत्यपित्वतियोगमेव विधत्ते ।

तथैव विरेचनातियोगे तु शेषौषधं वमनेनैव निस्सारयेदिति। तत्रापि तथैवातियोगभयः।

## विरेचनं मधु सैंधवसितोपलघृतैर्मध्याह्ने समुत्क्लेश्य पित्तम् २९

तथा च विरेचनमपि त्रिवृच्चूर्णादिकं मधुसैंधवघृतसितोपलादिभिर्देयम्। तच्च पित्तमुत्क्लेश्यैव मध्याह्ने स्वभावतः पित्तप्रकोपकालेदेयम्।

## त्रिशद्विंशतिदशवेगाः शुद्धीनाम् ३०

तत्र त्रिशद्वेगाः प्रधानशुद्धेः, विंशतिवेगाः मध्यशुद्धेः, तथा च दशवेगा अवर शुद्धेर्भवन्ति लक्षणानि।

## ते च पूर्ववदेव तापहानिश्च पित्तक्षयात् ३१

ते च वेगाः पूर्ववदेव ज्ञेयाः। अर्थाद्दशसु वेगेषु वातो, दशसु पित्तं, दशसु कफश्चेदागच्छति तदा प्रभूततमदोषाणां प्रधानशुद्धिः। तथा पित्तागमपर्यन्तं विंशतिवेगेषु मध्यशुद्धिर्मध्यवलम्। दशसु वातागमएवावरशुद्धिर्महाबलं ज्ञेयम्। प्रभूततरदोषाणान्तु, अष्टौवेगाः वातस्याष्टौपित्तस्य चत्वारः कफस्य चेत्प्रधानशुद्धिर्हीनबलम्। पित्तागमपर्यन्तं मध्यशुद्धिर्मध्यबलं, वातागमपर्यन्तमवर शुद्धिर्महावलंज्ञेयम्। प्रभूतदोषस्य तु चत्वारो वातस्य चत्वारः पित्तस्य द्वौ कफस्य चेत्प्रधानशुद्धिर्हीन वलं, पित्तागमपर्यन्तन्तु मध्यशुद्धिर्मध्यवलं, वातमात्रागमपर्यन्तमवरशुद्धिर्महावलं ज्ञेयमिति विस्तरः। तथा च पित्तसंक्षयात्तापहानिश्च भवति विरेचनैः।

## दोषमात्राश्चतुस्त्रिद्विप्रस्थाः ३२

तत्र वेगानुसारं शुद्धयस्तदनुसारं निर्हृतदोषाणां मात्रा उच्यन्ते। प्रवरशुद्धौ चतुष्प्रस्थाः मध्यशुद्धौ त्रिप्रस्थाः, अवरशुद्धौ द्विप्रस्थ इति।

## तच्चतुर्विधमनुलोमन स्रंसनरेचनभेदनानि ३३

तच्च विरेचनं चतुर्विधं भवति। यच्च पक्वं रेचयति तदनुलोमनं यथा हरीतकी। यच्चापक्वंरेचयति तत्स्रंसनमेव यथामलतासः। यच्च पक्वापक्वमुभयं रेचयति तद्रेचनं यथा त्रिवृत्। यच्च ग्रन्थिभूतं भित्वा रेचयति तद्भेदनं यथाकटुकीति।

### क्रूरकोष्ठानामनुवास्यैव ३४

तत्र क्रूरकोष्ठानां तु वातलाग्रहणी भवति, न विरिच्यति शीघ्रं व्रत त्वनुवास्यैव दद्याद्विरेचनम्। स्नेहं वा पाययित्वा वातशान्तिंकृत्वैव विरेचयेत् सप्तदिनानन्तरम्।

### सुकुमाराणां तु गुडादीनि विरेचनानि ३५

तत्र सुकुमाराणां खलु पित्तलाग्रहणी भवति तेषां तु विरेचनानि गुडेक्षुरसक्षीरसर्पिस्त्रिफलाद्राक्षारसा एव, शीघ्रमेव विरेचयन्ति, शीघ्र-पित्तोद्रेकात्।

इति श्रीजगदीशाचार्य्यविरचिते षट्कर्मशास्त्रे एकादशो मयूखः

# अथ द्वादशो मयूखराजः

### मयूखराजः कर्मराजत्वात् १

ननु सर्वेभागाः मयूखा इत्युक्ताः। अयं भागो मयूखराज इति। तत्किमर्थमित्युच्यते वस्तिकर्मविषयकोऽयं मयूखः। भवति हि वस्तिर्नाम कर्म सर्वकर्मसु प्रधानम्। चिकित्सार्धत्वात्, सम्पूर्णचिकित्सात्वाच्च वा, यथा पूर्वमुक्तम्। अतएव कर्मराजो हि वस्तिः। तद्विषयकोऽयं मयूखस्तस्मान्मयूखराज इत्युक्तो वेदितव्यः। अथवा वातो हि दोषराजः। तस्यचानन्यभेषजत्वादेव कर्मराजो वस्तिर्नाम कर्म तद्विषयकत्त्वादपि मयूखराजोऽयम्।

### तत्राधोमार्गेषु क्वाथतैलादिदानं वस्तिः २

तत्राधोमार्गेषु गुदयोनिशिश्नेषु क्वाथतैलादिप्रदानं वस्तिकर्मोच्यते।

### वस्तिसाधनसाध्यत्वान्नामकरणम् ३

अथ किमर्थं क्वाथतैलादिप्रदानं वस्तिकर्मोच्यते? तत्रोच्यते, वस्तिर्नाम गोमहिषाव्याजानां मूत्राशयानां कृतम्। ते च वस्तयः कर्मण्यस्मिन्साधनीभूताः। तेन साधनेन साध्यमिदं कर्म क्वाथतैलादिप्रदानमधोमार्गेण। तस्माद्वस्तिसाधनसाध्यत्वादिदं कर्माऽपि वस्तिरित्युच्यते। वस्तिनादीयत इति विग्रहः।

## त्रिधास्ते मार्गानुसारेण ४

ते च वस्तयो मार्गानुसारेण त्रिधा भवन्ति । गुदवस्तिः; योनिगर्भाशयवस्तिः, शिश्नवस्तिरिति मूत्रवस्तिर्वा ।

## द्विधौ च द्रव्यानुसारेण ५

पुनः खलु द्विविधा द्रव्यानुसारेण । कषायवस्तिर्निरूह आस्थापनं नाम । स्नेहवस्तिरनुवासनं नामेति ।

## त्रिधा खलु मात्रानुसारेण ६

पुनश्च त्रिधाः सन्ति मात्रानुसारेण । मात्रावस्तिरनुवासनवस्तिर्निरूहवस्तिश्च । तत्र प्रसृतमात्रस्नेहो दीयते यस्मिन् स, मात्रावस्तिरिति । त्रिप्रसृतमात्रस्नेहोदीयते यस्मिन् सोऽनुवासनवस्तिः । द्वादशप्रसृतमात्रक्वाथो दीयते यस्मिन् स निरूहणवस्तिरिति । स एवास्थापनवस्तिः कषायवस्तिर्वोच्यते ।

## अष्टधा खलु क्रियानुसारेण ७

तथा च क्रियानुसारेणाष्टधा भवन्ति । तद्यथा उत्क्लेशनवस्तिः, लेखनवस्तिः, शोधनवस्तिः, शमनवस्तिः, वृंहणवस्तिः, वृष्यवस्तिः रसायनवस्तिः स्तम्भनवस्तिश्च । तत्र ते क्रमशोदेयाः । तद्यथा पूर्वमुत्क्लेशनं ततो लेखनं ततः शोधनं ततश्शमनं ततो वृंहणं ततो रसायनवृष्यौ ततः शुक्रस्तम्भनं वस्ति दद्यात् तत्रातीसाररक्तातीसाराधोरक्तपित्तेषु चापि स्तम्भनवस्तिः प्रदीयते ।

## त्रिधा शमनाः ८

तत्र ये शमनवस्तयस्ते त्रिधाः । वातशमनः पित्तशमनः कफशमनश्च ।

## अङ्गानुसारेण नवधाः ९

पुनश्चाङ्गानुसारेण नवधा वस्तयो भवन्ति । शिरोवस्तिः, पार्श्ववस्तिः, पृष्ठवस्तिः, उदरवस्तिः, उरोवस्तिः, कटिवस्तिः, गुदवस्तिः, योनिवस्तिः, मूत्रवस्तिश्चेति नव ।

## केवलस्नेहात्मका, ऋते गुदवस्त्यादिभ्यः १०

तत्र गुदयोनिमूत्रवस्तीन् परित्यज्य सर्वे स्नेहवस्तय एव । केवलस्नेहेनैव साध्यन्ते ते यतः ।

## उभयात्मका गुदवस्त्यादयः ११

तत्रापि गुदवस्त्यादयो न केवलाः कषायवस्तयः । अपि तूभयात्मकाः । कषायत्मका स्नेहात्मकाश्चेति । आस्थापनानुवासनसञ्ज्ञकाः ।

## तत्रार्द्धार्धप्रसृतमुत्तरोत्तरमाद्वादशाब्दं यावन्निरूहमात्रा १२

तत्र निरूहवस्तेर्मात्रा तु द्वादशवर्षायुःपर्यन्तमर्धार्धप्रसृतंवर्धयेत् । तद्यथा एकवर्षवयस्कस्यार्धप्रसृतं क्वाथं दद्यात् । वर्षद्वयात्मकस्य प्रसृतं, तथैव द्वादशवर्षायिषट्प्रसृतम् । क्रमशोयथा—

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | वर्षायुषे |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| $\frac{१}{२}$ | १ | १$\frac{१}{२}$ | २ | २$\frac{१}{२}$ | ३ | ३$\frac{१}{२}$ | ४ | ४$\frac{१}{२}$ | ५ | ५$\frac{१}{२}$ | ६ | प्रसृत-क्वाथः |

अर्थाद्वयः काल संख्यातोऽर्धसंख्यकप्रसृतमात्रं वर्धितं क्वाथं दद्याद्यथा-वयोद्वादशवर्षायुः पर्यन्तानामेव ।

## तत एकैकमष्टादश पर्यन्तानाम् १३

तदनन्तरन्तु द्वादशवर्षादारभ्याष्टादशवर्षपर्यन्तानामेकैकप्रसृतवृद्धिः कार्या क्वाथस्य । तद्यथा—

| १२ | १३ | १४ | १५ | १६ | १७ | १८ | वर्षायुषे |
|---|---|---|---|---|---|---|---|
| ६ | ७ | ८ | ९ | १० | ११ | १२ | प्रसृतक्वाथः |

सार्द्धप्रस्थामित्यर्थः ।

## आसप्ततेः षोडशवार्षिकी १४

सप्ततिवर्षायुषोऽनन्तरं तु षोड़शवार्षिकी मात्रा स्यात् दशप्रसृतात्मिकेति ।

## चतुर्थभागस्त्वनुवासनस्य १५

तत्र निरुहमात्रामुक्त्वेदानीमनुवासनमात्रोच्यते । यन्निरूहवस्तेर्या मात्रा दीयते तस्याश्चतुर्थभागा मात्रा स्नेहस्यानुवासनार्थं भवति । सापि मात्रा वयोनुसारेणैव तथैव परिवर्धनीया । न तु मात्रावस्तौ ।

## बालानां मात्रावस्तिरपि यथानुवासनम् १६

बालानामपि मात्रावस्तिः कल्पनीयः । सोऽप्यनुवासनमिव । तद्यथा या यूनामन्तिमाऽल्पीयसीस्नेहमात्रा सा यूनां मात्रावस्तिरित्युच्यते ।

प्रसृतमात्रमिति । तथैव या बालानामन्तिमाऽल्पीयसीमात्रा स्नेहस्य सा मात्रा बालानां कृते मात्रावस्तेरित्युक्तात्रेदितव्या परिमाणेन इति ।

### निरुहघटकमात्राः क्वाथस्नेहमधुकल्कसैंधवगुडानां सार्द्धपञ्च-त्रिद्व्येकपादपादप्रसृतानि, ऋतेक्षीरवस्त्यादिभ्यः १७

तत्र निरूहणवस्तौ ये घटकाः सन्ति तेषां सह मात्राभिरिदानीमुपदेशः क्रियते । तत्रक्वाथस्नेहमधुकल्कसैंधवगुडानि घटकाः भवन्ति । तत्र क्वाथस्तु सार्द्धपञ्चप्रसृतमात्रः, स्नेहस्त्रिप्रसृतमात्रः, मधु, द्विप्रसृतमात्रम् । कल्क एक प्रसृतमात्रः सैंधवं पादप्रसृतमात्रम् । गुडञ्च पादप्रसृतमात्रम् । तद्यथा—

| क्वाथः | स्नेहः | मधु | कल्कः | सैंधवं | गुडम् | |
|---|---|---|---|---|---|---|
| ५$\frac{1}{2}$ | ३ | २ | १ | $\frac{1}{4}$ | $\frac{1}{4}$ | प्रसृतम् |

तदेतत्सर्वं समुदितं द्वादशप्रसृतमात्रं भवति । सैषा मात्रा क्षीरवस्तेर्न भवति । आदिपदेन माधुतैलिकानां ग्रहणम् ।

### पादहीनाः माधुतैलिकाः १८

तत्र माधुतैलिकाः वस्तयः पादप्रमाणद्रवहीनाः भवन्ति । मधु च तैलञ्च प्राधान्येन दीयेते तस्मान्माधुतैलिका इत्युच्यन्ते । व्याधिशतेष्वपि सिद्धत्वाद्बलवर्णोपचायकत्वाच्च सिद्धवस्तयोऽप्युच्यन्ते ते । मृदवस्ते भवन्ति मधुतैलाधिक्यान्मात्राहीनत्वात्तीक्ष्णद्रव्यराहित्याच्चेति । मृदुत्वादयन्त्रणत्वञ्च भवति । नवप्रसृतान्येषां मात्रा ।

### अथवा वातपित्तकफेषु चतुर्थषष्ठाष्टमभागाः स्नेहस्य १९

अथवा विशेषेण स्नेहस्य मात्रा उच्यन्ते । वातदोषप्रधाने निरूहवस्तौ-क्वाथाच्चतुर्थभाग एव स्नेहः स्यात्तथैव पित्तप्रधाने तु षष्ठभाग एव कफ प्रधाने त्वष्टमभाग एवेति ।

### मधुनस्तु विपरीतमेव वातकफयोः २०

मधुनो मात्रास्तु न तथा । विपरीता एव वातकफयोः । तद्यथा वातप्रधानेऽष्टमभागं मधु, कफ प्रधाने तु चतुर्थभाग एवेति । शेषत्वा-त्पित्तप्रधाने तु तावदेवेतिषष्ठमेव भागम् कफोच्छेदकत्वाद्विशेषेण, कफप्रधाने महती मात्रेति रहस्यम् ।

## शेषाणां समानाः २१

शेषाणां क्वाथकल्कसैंधवादीनां समाना एव मात्रा ज्ञेया इति ।

## पूर्वं मधुना सैंधवं तदनुस्नेहम् २२

तत्र संयोजनप्रकारोः वर्ण्यते । पूर्वं खलु सैंधवं पिष्ट्वा मधुना सह मिश्रयेत् । तदनुस्नेहं मिश्रयेत् सम्यक् ।

## ततः क्वाथगुडकल्काः खजेन २३

तदनन्तरं क्वाथं प्रक्षिप्य गुडकल्कौ च प्रक्षिप्य सम्यग्रूपेण खजेन मथ्नीयात् । येन सर्वे घटकाः सुमिश्रिताः स्युरिति । खजस्तु लघुदधिमन्थनः ।

## परिपूर्य वस्तिं स्निग्धाग्रनेत्रं प्रणयेत् २४

तदनन्तरं सुमिश्रितं कोष्णं सत् सह्योष्णं वा कषायं प्रक्षिप्य वस्तौ पुटके, ततः स्नेहेन नेत्राग्रभागं स्निग्धं कृत्वा सुखेन प्रवेशयेन्नेत्रम् । स्निग्धनेत्राग्रभागो न गुदं पीडयते, गुदे च स्नेहाभ्यञ्जनं कार्यम् । नयति द्रवमिति नेत्रम् नलिकेत्यर्थः ।

## वामपार्श्वशयानायैव २५

वस्तिदानसमये रोगिणः शयनविधिरुच्यते । वाम पार्श्वे शयानायैव वस्तिं दद्यात् । किं कारणं ? सुखेनाशये प्रवेशात् । गुदस्य सुखेनोपलब्धिर्भवति । न च गुदवलय पीड्यन्ते इति । क्वाथस्य सुखप्रवेशत्वञ्च ।

## प्रसारितवामपादाकुञ्चितदक्षिणपादाय च २६

तथा च न हि वामपार्श्वशयनमेव पर्याप्तम् अपितु सहैव तथासनेकृते वामंपादं प्रसारयेच्च दक्षिणपादं जानुसन्धेराकुञ्चयेच्चेति । इत्थमेव सुखेनावाप्तिर्द्रवस्येति ।

## श्वसत एव लम्बम् २७

श्वसते, श्वासान् गृह्णाति लम्बान् यस्तस्मै, एव वस्तयो देया इति । किं कारणं ? शीघ्र ग्रहणं भवति द्रवस्य यतः ।

## क्षवथुहिक्काकासा वर्जनीयाः २८

तथा च क्षवथुं हिक्कां कासञ्च सर्वथावर्जयेत् अन्यथा तज्जन्याघातै-र्विरुद्धगतिर्द्रवस्यभवति। अर्थान्न सम्यग्द्रवप्राप्तिरपितु वस्तिदानकालमध्य एव क्षवथुहिक्काकासाघातैर्वहिर्धावति, तस्मात्तान् वर्जयेत् प्रतिरोधयेदित्यर्थः, वस्तिदानकाले।

## प्रतीक्ष्यकालं यावदपि २९

न च वस्तिदानकाल एव प्रतिरोधयेदपि तु यावत्कालपर्यन्तं वस्ति-द्रवस्थितिरनिवार्या तावान् प्रतीक्ष्यकालः। तावदपि तान्क्षवथुहिक्का कासान्परिवर्जयेत्। किं कारणमुच्यते, आशुद्रवस्य वहिरागमान्न वस्ति प्रभावो न च तत्फलमिति शेषः

## सावशेषमेव द्रवमप्रवेशाय वायोः ३०

तत्रापि सावशेषं द्रवं दद्यात्। अर्थात्तावानेव द्रवो देयो, यावति दत्ते किंचिदवशिष्टः स्यात्। अन्यथा वायुप्रवेशादाध्मानं भवति पीड़ा च वस्त्यनागमोऽपि। तद्रक्षार्थमेव सावशेषं द्रवं दद्यात्।

## मथितत्त्वान्न वारितरत्त्वं मधुनः, विलोडयेद्वा ३१

ननु सावशेषे तु वारितरत्वात्स्नेह एवावशिष्टः स्यादिति चेन्न, सम्यग्निर्मथितत्वान्न मधुनो वारितरत्वं भवति। तथाकृतेऽपि यदि कथ-ञ्चिद्वारितरत्वं जायेत् तदा, करेण विलोडयेत्पुनः पुनः। विलोडयन्नेव वा दद्यादिति। येन न स्नेहस्य स्थितिःस्यादुपरि। इति तु एनीमापात्रे प्रक्षिप्य वस्ति-दानविधिः विलोडयन्निति।

## तथासति तूदराभ्यङ्गस्वेदने कार्ये ३२

तथा सति, वायौ प्रविष्टे, आध्माने वस्तेरूर्द्ध्वगमने चोदरस्याभ्यङ्गः स्वेदनञ्च कर्तव्ये।

## दत्वा नितम्बेऽवपीडयेच्चरणोत्कर्षापकर्षणे च जानुभ्याम् ३३

वस्तिं दत्वा वैद्यो रोगिणो नितम्बेऽवपीडयेत्स्वहस्ताभ्याम्। रोगिणा-चोदरतलशयानेन स्वचरणयोरूत्कर्षणमाकाशंप्रति तथा चापकर्षणमपि पृथिवींप्रति, जानुभ्यां, पञ्चसप्तवारं वा कर्त्तव्ये। विधिनानेन क्वाथ

आन्त्रयोः सर्वत्रान्तः प्रविशति। शीघ्रागमश्च न भवति तस्य, स्वकालात्पूर्वमिति। तदनन्तरंपृष्ठे ततो दक्षिणपार्श्वे च किंचित्किंचित् कालं स शयीत येन परितः प्राप्तिश्च स्याद्द्रवस्य।

## मुहूर्त्तमेव निरूहस्थितिकालः ३४

ननु कियान्कालो वस्तीनां स्थितिकाल इत्युच्यते, निरूहवस्तिस्थितिकालस्तु मुहूर्तपर्यन्त एव। तावत्कालस्थितो निरूहः सम्यग्निरूहयति। ततोऽल्पकालस्थितिश्चेत्सम्यग्निरूहणं न भवति। अधिककालस्थितावपि त्वहितमेव।

## द्विगुणाच्चतुर्गुणोऽनुवासने ३५

अनुवासने स्नेहस्थितिकालस्तु निरूहाद्द्विगुणश्चतुर्गुणो यावान्वेति। अत्यल्पमात्रात्त्वात्।

## निरस्तवेगे कोष्णजलावसेकः ३६

मुहूर्तानन्तरं वा वेगागमे कोष्णजलस्यैवावसेकेन गुदं प्रच्छालनीयम्। शीतलजलावसेकेन तु त्वरितं गुदसंकोचान्नावशिष्टः क्वाथः पुनरायाति। वेदना च सम्भवति।

## कालेऽनागते शोधयेत् ३७

काले गतेऽप्यानागते वेगे गोमूत्रयवक्षारकाञ्ज्यादिभिस्तीक्ष्णीकृतशोधकवस्तिनाशु शोधयेत्। न तु प्रतीक्षेताध्मानादिदोषकरत्वादिति शेषः।

## शाल्यन्नं दद्यात्स्नातवते रसादिना ३८

तदनन्तरं निवृत्तशौचक्रियाय स्नातवते च शालीनां भक्तं मांसरसेन वाते, दुग्धेन पित्ते, तथा च कफे सूपादीनां यूषैः सहापि वा, इत्यास्थापनस्य पश्चात्कर्म।

## सैंधवसितोपले दशमविंशभागौ स्नेहादनुवासने ३९

तथा चानुवासनवस्तेर्घटकान्मात्राश्च वर्णयति सैंधवं स्नेहाद्दशमभागं स्यात्। सितोपलस्य च विंशोभागःस्यात्। उभयं पिष्ट्वा स्नेहे प्रक्षिप्य विमथ्य दद्यात् पूर्वोक्तविधिनैव। विशेषरूपेण च नितम्बावपीडनं, चरणयोरूर्ध्वाधश्चापकर्षणम्। अल्पमात्रत्वात्।

## जीर्णान्नेऽल्पभुक्ताय सायमेव ४०

तच्चानुवासनं सायंकालेदेयम्। जीर्णेसति मध्याह्नकृतभोजने। तच्चाल्पभुक्ते सत्येव। सायन्तु वातोत्क्लेशकालः स्वभावतस्तस्मादिति। जीर्णे सति सम्यग्वेगानुलोमनं सविट्कञ्च तैलांगमः। अर्जीर्णे तु पचनकाले पित्तोत्क्लेशान्नानुलोमनं वेगागमश्च न स्यात्। तस्माज्जीर्णे दद्यात्। अल्पभुक्तत्वात्स्नेहस्य नोर्ध्वगमनं न वामाशये प्राप्तिः। तेन विघ्नानां भयो न भवति। अत्यधिकमात्रात्वान्निरुहोऽभुक्ते दीयते नान्यथा सुप्राप्तिः सर्वप्राप्तिश्चस्यात्।

## अल्पलवणक्वाथाभ्यामयोगविलम्बे ४१

तत्राल्पमात्रा चेद्भवति लवणस्य क्वाथस्य च तदा त्वयोगो भवति। सम्यग्निरूहणाभाव इति विलम्बञ्च। लवणाभावाद्दोषाणामविलयनीकरणत्वात् क्वाथमात्राल्पत्त्वात्तु विलम्बेनागमः।

## अतिमात्रया शीघ्रागमो लवणेन दाहातीसारौ ४२

अतिमात्राचेत्क्वाथस्य तदा तु शीघ्रागमो भवति यामत्रयात्पूर्वम्। लवणस्यातिमात्रया दाहश्च जायतेऽतीसारश्चेति।

## अत्युष्णतीक्ष्णशीताभ्यां विदाहमूर्च्छास्तम्भाः ४३

अत्युष्णतया तीक्ष्णतया तु विदाहो मूर्च्छा पित्तविकारा, अतिशीततयाऽवेगस्तस्य वातरोगाध्मानादयो जायन्ते।

## अपक्वस्नेहाच्छोथः ४४

अपक्वस्नेहात्तु शोथो जायते गुदे। तस्य तु शोधनवस्तिभिर्विरेचनेन वा परिहारः। तस्मान्नापक्वं प्रयोजयेत्।

## पित्तेषु शीता एव ४५

प्रभूतपित्तजेषु दाहातीसाररक्तपित्तादिषु रोगेषु तु शीता एव वस्तयो देया इत्यपवादो वेदितव्यः।

## नात्युच्चावचा मृद्वास्तरणोपपन्ना च शय्या ४६

वस्तिदानार्थं रोगिणः शयनाय या शय्या स्यात्सा तु, अत्युच्चावचा न स्यात्। तथा मृदुस्वच्छवस्त्राातता च स्यादिति।

## मात्रावस्तयो बृंहणाय प्रतिवासरीयाः यथानुशासनमन्ये ४७

तत्र यो मात्रावस्तिः स वृंहणाय प्रतिदिनं देयः। शेषाः वस्तयस्तु यथानुशासनं कृतं पूर्वं, विकल्पेन देया इत्यर्थं।

## शीतवसन्तयोर्दिवाग्रीष्मवर्षाशरत्सु रात्रौ स्नेहाः ४८

तत्र स्नेह वस्तयस्तु शीतवसन्तकाले शैत्याधिक्यांद्दिने, ग्रीष्मवर्षयो रौष्ण्याधिक्याद्रात्रावेव देया इति। दोषास्तुपूर्वमुक्ताः।

## द्विगुणः परिहारकालो वस्तिकालात् ४९

तत्रयावत्कालपर्यन्तं वस्तीनामुपक्रमः प्रचलति ततो द्विगुणकालपर्यन्तं परिहारः कर्त्तव्य इति।

## अत्यासनस्थानादि परिहाराः ५०

तत्रातिविलम्बमासनं स्थानञ्च बहुवचनं वहुयानगमनं वहुस्वप्नं दिने मैथुनंवेगरोधः शीतलोपचारः अत्यातपसेवनमतिशोकरोषौ च वर्जनीया इति परिहारा उक्ताः।

## दोषौषधादिविचारो वस्तिसिद्धिवीजम् ५१

तत्रेदानीं वस्तिकर्मणः सिद्धिवीजमुच्यते येन वस्तयः प्रदीयमानाः सिद्धिं प्रयच्छन्ति। दोषं, वातं, पित्तं, कफं विचार्य, औषधमुष्णवीर्यं शीत-वीर्यादिकञ्च, देशं, शीतमुष्णं वा, कालं, शीतवसन्तादि रात्रिदिवञ्च प्रकोप-कालञ्च तथा सात्म्यासात्म्यं तीक्ष्णमन्दाग्निं सत्वं मानसिकस्थितिमिति वयो, बालं युवानं वृद्धं वा, बलं, शारीरिकं सम्यग्विचारितानि तदा दत्ताः वस्तयः सिद्धिमन्तो भवन्ति।

## तत्र कफादौ क्रमशएकादयः ५२

तत्र दोषविचारः क्रियते। कफदोषश्चेदेकं त्रीन्वा वस्तीन्दद्यात्। पित्तदोषश्चेत्पञ्च सप्त वा दद्यात् वात दोषश्चेन्नवैकादश वस्तीन् दद्यादिति। पुनर्वा तावतः। तत्र कफे रुक्षोष्णाः पित्ते शीताः वाते स्निग्धाः प्राधान्येन वस्तयः स्युरनुवासनान्येव।

## क्रमशोऽण्डकोषस्निग्धतादि ५३

तत्र क्रमशः प्रथमानुवासनेनाण्डकोषे द्वितीयेन वस्तिशिरसोर्वात शान्तिः। तृतीयोबलवर्णकृत् चतुर्थो रसकृत्। पञ्चमेन रक्तस्निग्धतावृद्धिः। षष्ठो मांसं सप्तमो वसामष्टमोऽस्थीनि नवमो मज्जानं संस्नेहयति।

## शुक्रदोषे द्विगुणाः ५४

यदि चेच्छुक्रदोषो द्विगुणाः वस्तयोदेया अष्टादश इति।

## रुद्धविषमनेत्रार्शोविड्विवन्धैरग्रहणम् ५५

इदानीं वस्तेरग्रहणे कारणान्युच्यन्ते। यदि नेत्रच्छिद्रं रुद्धं विषमनेत्रं वा प्रणीतं गुदे, तदा गुदकलया वलिना वा पिहितं स्यान्नेत्रमुखं, अर्शांसि चेद्वा पुरीषस्य विवन्धाद्ग्रन्थिभिस्तदा वस्तिद्रव्यस्यान्तर्ग्रहणं न भवति।

## दोषानुत्क्लेशादवीर्यत्त्वाच्च द्रव्यस्य नैति ५६

वस्त्यनागमनहेतुरूच्यते। यदि चेद्दोषो नोत्क्लेशितः। द्रव्यं वा स्यादवीर्यं तदापि वस्तिर्नैति वहिरिति।

## जरद्गवादीनां पुटकानि वस्तीनाम् ५७

तत्र साधनीभूतपुटकानि तु वस्तिदानाय जरद्गवमहिषहरिणाव्यजानां वस्तीनां गृह्णीयात् वस्तिर्नाम मूत्राशयः।

## तानि शुद्धविगन्धमृदुदृढ़ानि ५८

तानि च वस्तिपुटकानि शुद्धानि गन्धरहितानि मृदूनि तथा च दृढ़ान्यपि स्युरिति।

## अलाभेऽतिघनपटादीनां ५९

जरद्गवादीनां वस्त्यलाभेऽतिघनपटादीनां निर्माय देयाः।

## रबरनिर्यासलौहपात्रेणाद्यत्वे ६०

अद्यत्वे तु रबरसंज्ञकनिर्यासविशेषविनिर्मितपुटकेन लौहादिनिर्मितनलकेन च दीयते निरूहवस्तिः। तथा च स्नेहवस्तयोऽपि होलिकोत्सवरागप्रक्षेपिकया सदृशेन नाडीयन्त्रेण कर्णशोधिकया तुल्येन दीयते लौहनिर्मितेन। अनेन वायुप्रवेशभयोऽपि न भवतीति। तदुभयमपि प्रशस्तम्। वस्तिपुटकेन

तु किञ्चिद्विबन्धे सत्यपि बलात्क्वाथप्रवेशः क्रियते। तस्माद्वस्तीनां प्रशस्ततरत्वमेव। तद्यथा विबन्धवशात्पुनः पुनर्वस्तिदानेऽपि लौहपात्रेणाधुनिकरीत्यान्तः प्रवेशयितुमशक्तैः राजकीयैर्विश्वविश्रुतचिकित्सकैः परित्यक्तो मरणासन्नश्च रोगी वस्तीजनपदवासी वस्तिपुटकेन निरूह्य रक्षितो मया नैमिषारण्यचिकित्सालये। महीयसी च माता धनस्य, परिवर्धनाय चिकित्सालयस्य दत्ता परिवर्धितश्च मयेति तस्मादिति।

## नेत्राणि खल्वपि स्वर्णादीनाम् ६१

तत्रनेत्राणि खल्वपि स्वर्णरजतताम्रत्रपुकांस्यलौहरीत्यस्थिविषाणदन्तनालद्रुमवेणुमणिभिर्विनिर्मितानि स्युः।

## ऋज्वादीनि गुडिकामुखानि च ६२

तानि नेत्राणि ऋजूनि गोपुच्छाकृतीनि स्थूलमूलतन्वग्राणि च स्युः चिक्क्वणानि च। तथा च मुखाग्रे गुडिका स्याद्येन गुदे व्रणादिकं न स्यात्। मूले स्थूलत्वात्सम्यग्गुदच्छिद्रपरिपूर्णत्वान्न द्रव्यस्य वहिर्गतिः। गुडिका गोलायितमित्यर्थः।

## मूलाग्रेऽङ्गुष्ठकनिष्ठिकापरिणाहौ ६३

तेषां मूलानि त्वंगुष्ठपरिणाहानि तथा चाग्रभागाः कनिष्ठिकापरिणाहाः स्युरिति।

## बालानां तदङ्गुष्ठकनिष्ठिकाभ्याम् ६४

बालानां कृते यानि नेत्राणि स्युस्तेषां मूलाग्रपरिणाहौ तु तेषामेवांगुष्ठ कनिष्ठिकाभ्यां तुल्यौ स्याताम्। बालांगुष्ठकनिष्ठिकापरिणाहतुल्यपरिणाहौइत्यर्थः।

## षडष्टद्वादशाङ्गुलप्रमाणानि च षड्द्वादशाष्टादशवर्षीयाणां कृते ६५

तथा चायामप्रमाणानि तु षड्वर्षीयाय षडंगुलं द्वादशवर्षीयायाष्टांगुलं तथा चाष्टादश वर्षीयाय द्वादशांगुलञ्च स्युरिति।

## कर्णिकात्रययुतानि च ६६

तानि च कर्णिकात्रययुतानि, नेत्राणि स्युः।

द्वे वस्तिवन्धनायैका, गुदातिप्रवेशावरोधाय ६७

तत्रद्वे कर्णिके तु मूले वस्ति पुटकस्य दृढ़वन्धनाय। एका च नेत्रस्य मध्ये येन गुदेऽतिप्रवेशो मा भूत्।

छिद्राणि मुद्गचणककर्कन्धुनिभानि ६८

नेत्राणां छिद्राणि खलु वयःक्रमान्मुद्गचणककर्कन्धुप्रवेशयोग्यपरिणाहसदृशानि स्युः।

तत्र ह्रस्वादीनि वर्जनीयानि, अप्राप्त्यादिदुर्गुणत्वात् ६९

तत्रातिह्रस्व, दीर्घ, तनु, स्थूल, जीर्ण, पार्श्वकोणक, पार्श्वच्छिद्र, वक्राणि नेत्राणि वर्जनीयानि। किं कारणम्? क्रमशउच्यते, ह्रस्वादप्राप्तिर्गुदे क्वाथादीनां भवति। तथैव क्रमशोऽतिप्राप्तिर्नेत्रस्य, निःसरणं क्वाथादेः, कर्षणं गुदस्य, क्षणनं गुदे, क्षोभो गुदे, वहिः स्रवणं क्वाथादेः, जिह्मगतिश्च नेत्रस्य भवतीति वर्जयेदष्टौ।

वस्तयश्च त्याज्याः विषमादयो गतिवैषम्यादिदुर्गुणत्वात् ७०

तत्र वस्तयोऽपि विषम मांसल सच्छिद्रस्थूल जालक वातलच्छिन्नक्लिन्नाः त्याज्याः यतो हि गतिवैषम्य, विस्रत्व, स्राव, दौर्ग्राह्यत्व, निःस्रवणानिलत्व, च्युत्ति धार्यत्वादि दुर्गुणाः भवन्ति क्रमशस्तेषु।

अथ प्रशस्तिर्वस्तिवर्यइति ७१

अधुनान्ते वस्तिः प्रशस्यते—

वस्तिर्वयःस्थापयितासुखायुर्बलाग्निमेधास्वरवर्णकृच्च।
सर्वार्थकारी शिशुवृद्धयूनां निरत्ययः सर्वगदापहश्च।१।
तस्यातिवृद्धस्य शमाय नान्यद्वस्ति विना भेषजमस्ति किंचित्।
तस्माच्चिकित्सार्द्धमिति ब्रुवन्ति सर्वाञ्चिकित्सामपि वस्तिमेके।२।

तस्य वातस्य इत्यर्थः।

इति श्रीजगदीशाचार्य विरचिते षट्कर्मशास्त्रे द्वादशो मयूखराजः

# अथ त्रयोदशो मयूखः

## नस्यं खलु त्रिविधं क्रियानुसारेण १

तत्र नस्यं खल्वपि त्रिविधं भवति। शोधननस्यं, बृंहणनस्यं, शमन-नस्यंञ्चेति क्रियानुसारेण भेदाः।

## द्विविधं खल्वपि पुनः द्रव्यानुसारेण २

द्रव्यानुसारेण पुनर्द्विविधं भवति। प्रधमनावपीडने। ननु किं पुनः प्रधमनम्? नाड्याध्मायते प्रकर्षेण यत्तत् प्रधमनम्। तथा चावपीड्य स्वरसादि दानमवपीडनमुच्यते।

## पुनर्द्विविधं रूक्षस्निग्धे ३

पुनः खलु द्विविधं गुणानुसारं, रूक्षं स्निग्धमिति तत्र यच्चूर्णं तद्रूक्षं यदौषधसिद्धस्नेहः स्निग्धमुच्यते तत्।

## उत्कटदोषे प्रधमनं श्लेष्मणि ४

तत्र खल्वत्युत्कटदोषे विशेषतः श्लेष्मणि रूक्षं चूर्णीभूतं प्रधमनं नाम शोधननस्यं दीयते।

## वाते स्निग्धमेव ५

उत्युत्कटे साधारणे वा, वातदोषे तु स्निग्धमेव दीयते। वातघ्नत्वात् स्नेहस्येति।

## पुनस्त्रिविधं स्नेहमात्रानुसारेण विन्दुमात्रादि ६

पुनः खल्वपि त्रिविधं भवति, स्नेहमात्रानुसारेण विन्दु मात्रादि। तद्यथा-विन्दुमात्रं, प्रतिमर्शो, मर्श, इति तत्र विन्दुमात्रे नस्ये त्वेकविन्दुरेव मात्रा भवति। प्रतिमर्शे मात्राविन्दुद्वयमेव। मर्शे तु षड्विन्दुभ्य आरभ्य विन्दुशतपर्यन्तं भवति।

## मर्शं त्रिकालेषु दीर्घम् ७

मर्शस्य या मात्रा दीर्घा भवति। सा तु नैकवारमेव दीयते अशक्यत्वाद्दातुम् मात्राधिक्यात्। तस्माद्दिने वारत्रयं कृत्वा दीयते। या तु ह्रस्वा मात्रा सा सकृदेव सम्पूर्णा। मध्या, वारद्वयेच।

## प्रातर्मध्याह्नसायंकालेषु यथादोषम् ८

तत्र नस्यं खलु, कफे चेत्प्रदीयेत्, प्रातःकाले प्रदेयम्। पित्ते चेन्मध्याह्ने देयम्। वाते चेत्सायंकाले देयमिति यथादोषम्। यथादोषप्रकोपकालः स्वभावत एव तदेति विरिच्यतीति।

## ऋत्वनुसारेण च ९

तथा चर्त्वनुसारेणापि देयं नस्यम्। तद्यथा शिशिरवसन्ते कफप्रकोपात्प्रातःकाले, ग्रीष्मवर्षयोर्वातप्रकोपात्सायं, शरद्धेमन्ते मध्याह्ने पित्तकोपादिति। विशेषतस्तु वर्षाकाले स्पष्टसूर्य्ये, न तु मेघाच्छन्ने। अयोगात्, शैत्योपहतत्वात्।

## शोधनकर्मणि रेचनमेव १०

तत्र तु शोधनकर्मणि रेचनमेव नस्यं देयम्। चूर्णं वा स्नेहं वा वैरेचनिकधूम्रं स्वरसं वा यथादोषम्।

## अनवागत्यवाक्शिरसोर्न ११

तत्रानवाक्शिरसोऽत्यवाक्शिरसश्च न प्राप्नोति सम्यक्। अयोगो भवति। तस्मादवाक्शिरसे एव देयं शयानाय।

## नलिकाद्रावकाभ्याम् १२

चूर्णञ्चेन्नलिकया द्रवश्चेद्द्रावकेण नासाच्छिद्रयोर्देयम्।

## अत्युत्कटेषु रात्रावपि १३

अत्युत्कटाश्चेद्दोषास्तेषु रात्रावपि यथावश्यकम्।

## अष्टषट्चत्वारो विन्दवो यथाबलम् १४

तथा च प्रवरमध्यावरबलानुसारेणाष्टषट्चत्वारो विन्दवो यथाक्रमं देयाः।

## अष्टवर्षात्पूर्वं न १५

तत्राष्टवर्षायुषः पूर्वं न देयम् । सोढुमशक्यत्वाद्बालानाम् ।

## न वाशीतिवर्षानन्तरम् १६

न च वा योऽशीतिवर्षायुर्विलंघितस्तस्मै देयम् । सोऽपि वार्द्धक्यातिशयेन सोढुमशक्तो भवतीति ।

## सौश्रुती प्रतिमर्शप्रक्रियानैत्यिकी १७

ननु कालत्रय एव दोषानुसारेण नस्यदानविधिरुपदिष्टा । सुश्रुतेन तु चतुर्दशकर्मान्तेऽपि उपदेशः कृतः । तद्यथा—शयन, मल, मूत्रत्याग, दन्तधावन, वमनाञ्जन, धूम्रपान, परिश्रम, भोजन मैथुन, हास, गण्डूष, शिरोभ्यङ्गेति चतुर्दशकर्माणि येषामन्ते प्रतिमर्शं गृह्णीयात् । इति कथम् ? तत्रोच्यते । न सा कार्मिकी प्रक्रिया । अपितु नैत्यिकी । स्वस्थेन बलारोग्यकामयमानेन नित्यं प्रातःकालादारभ्यसायंकालपर्यन्तं तल्पोत्थानादि चतुर्दशसु कालेषु नस्यं ग्राह्यम् । प्रतिहोरानन्तरं वा तल्पगमनं यावत् । किमर्थम् ? स्रोतो विशुद्धिमनःप्रसादत्वादिसिद्ध्यर्थम् ।

## मध्यपाक एव सः १८

स च स्नेहो नस्याय मध्यपाक एव स्यात् ।

इति श्रीजगदीशाचार्य विरचिते षट्कर्मशास्त्रे त्रयोदशो मयूखः

# अथ चतुर्दशो मयूखः

## रक्तमोक्षणं पञ्चविधं शृङ्गादिसाधनभेदेन १

तत्र रक्तमोक्षणं खल्वपि पञ्चविधं क्रियते। शृङ्गादिसाधनभेदेन। कानि पुनः शृङ्गादिसाधनानि? शृङ्गं जलौकालावुः प्रच्छानं शिरोवेध इति। तत्र शृङ्गेण, जलौकसा, अलावुना, लवित्रेण, सिरावेधकशस्त्रेण च क्रियते। यच्च लवित्रेण प्रच्छानं तदल्पं त्वङ्मांसगतं भवति।

## क्रमाद्वातपित्तकफैकाङ्गसर्वाङ्गगतत्रिदोषाहरणम् २

तत्र क्रमशः शृंगं वातस्य, जलौका पित्तस्य, अलावुः कफस्य, प्रच्छानमेकाङ्गैकदेशीयत्रिदोषं, सिरावेधस्तु सर्वाङ्गगतदोषमाहरति सहरक्तेन।

## दश चतुर्विंशति द्वादशैकाङ्गुलसर्वशरीरेभ्यः क्रमादाहरणं तेषाम् ३

तत्र तेषां दोषाणां क्रमाच्छृङ्गेण दशांगुलेभ्यः परितो वातस्य, जलौकसा-चतुर्विंशत्यंगुलेभ्यः परितः पित्तस्य, अलावुना द्वादशांगुलेभ्यः परितः कफस्य, प्रच्छानेन विधिना सर्वाङ्गगतव्यापकत्रिदोषस्याहरणं भवति।

## सर्वैः सर्वेऽपि च ४

अथवा शृङ्गादिभिः सर्वैः सर्वेऽपि दोषाःनिर्ह्रियन्ते। यतोहि न चैकांगुलपर्यन्त त्रिदोषएव, सर्वाङ्गे वा दशांगुलपर्यन्तं वातएव, द्वादशांगुल पर्यन्तं कफ एव, चतुर्विंशत्यंगुलपर्यन्तं पित्तमेव, तिष्ठतीति। शृङ्गेण पित्तकफयोः, जलौकसा वातकफयोरलावुना च वातपित्तयोरप्याहरणं भवत्येव। अतः सर्वैः सवेऽपि निर्ह्रियन्ते।

## निर्हरणशक्तिरेव ज्ञेया ५

तस्मात्सा तु निर्हरणशक्तिरेव ज्ञेया। अर्थाद्दशांगुलं परितः शृङ्गेण, चतुर्विंशत्यंगुलं परितो जलौकसा, द्वादशांगुलं परितोऽलावुना, एकांगुलं परितः प्रच्छानेन, सर्वशरीरगतस्य तु सिरावेधेनेति दोषाहरणं भवति। तावच्क्षेत्राहरणशक्तिरिति ज्ञेयम्।

## जलमासामोक इति यथा दिवौकसः ६

तत्र जलमासां कीटानामोकः वासस्थानं भवति तस्माज्जलौकस उच्यन्ते। तद्यथा द्यौरेषामोक इति दिवौकसो देवाः इत्युच्यन्ते। इति नामकरणहेतुरुक्तः।

## ता द्विधाः सविषा निर्विषाश्च द्वादश ७

ताः खलु जलौकसो द्विविधाः भवन्ति। सविषाः निर्विषाश्च। तत्र सविषाः खलु कृष्णा कर्बुरा अलगर्दा इन्द्रायुधा सामुद्रिका गोचन्दनाख्याः षट्। निर्विषाः खल्वपि कपिला पिङ्गला शंकुमुखी मूषिका पुण्डरीकमुखी सावरिकाः षडिति। द्वादश ता इति। तत्र या खलु निर्विषास्ता एव षट् जलौकसः शोणितविस्रावणयोग्याःप्रयोगार्हाः इति।

## उपवेश्यावसेचयेत्तया शाययित्वा वा ८

तत्र रोगिणमुपवेश्य, शाययित्वा वा यथावश्यकं तया जलौकसा रक्त-मोक्षणं कारयेत्। सा पिपीलिकादष्टमिव दशति किन्तु नाकस्मात्, शनैः शनैरेव मुखेन रक्तं पिवति च शनैः शनैस्त्वचि मुखं प्रवेश्य ततो रक्तंमादत्ते।

## तोदकण्डूभ्यामादत्ते ९

तत्र गृहीते मुखेन च तोदः कण्डूश्च यदा, जायेत तदा जानीयात् यदादत्ते रक्तं शुद्धञ्च सम्यग्रूपेणेत्यर्थः न चात्र शुद्धस्य दोषविवर्जितस्या-दुष्टस्यरक्तेस्येत्यर्थः इति। न हि जलौकोवसेचनं भवति दोषविवर्जिते रक्ते। केवलार्थेऽत्र शुद्धशब्दोवर्तते। शुद्धं केवलमित्यर्थः।

## सम्यक्पीतां मोचयेत्सैंधवावचूर्णनेन १०

तत्र सम्यक्पीता तु स्वयमेव मुञ्चति। किन्तु न चेन्मुञ्चेत् तदा तस्याः मुखे सैन्धवपिष्टच्यवचूर्णनेन मोचयेत्। सैन्धवतैक्ष्ण्यं न सा सहते। उद्वेजिता सत्याशु विमुञ्चतीति।

## ततो वामयेद्रक्तमदासाध्यव्याधिभयात् ११

विमुक्तां पतितांञ्च वामयेदवपीडच काष्ठादिभिः। अन्यथा दुष्ट-रक्तपीतत्वाद्वहुमात्रापीतत्वाच्च तस्या रक्तमदो नामव्याधिर्भवतीति। सा व्याधिरसाध्या भवति। म्रियन्ते च ताः। तद्भयात्तासां रक्षार्थं वामयेत् ताः येन पुनरपि कार्यसिद्धिः स्यात्। अथाऽपि स्वोपकारिणं नैवापकुर्यादिति नयेनापि कार्यसिद्धचनन्तरं रक्षणीया सेति।

## ततो व्रणोपचारः शतधौतघृतेन १२

ततः व्रणोपचारःकर्तव्यः शतधौतघृतेन मध्वादिभिर्वा यथा चिकित्साक्रमः ।

## शीताम्बुपरिषेकश्चानवरूद्धे १३

यदि चेद्रक्तस्यावरोधो न स्यात्स्वतस्तदा तु शीतलाम्बुना परिषेचयेत् पुनः पुनः तेन च परिषेकेण व्रणस्य रक्तवाहिनीनां मुखसंकोचो भवति तेन रक्तावरोधो भवतीतिविज्ञानम् ।

## शीतेऽस्विन्नस्य चाप्रवृत्तिः १४

तत्र शीते कालेऽस्विन्नाङ्गस्य च रक्तप्रवृत्तिर्न भवति सम्यक् । किं कारणम् ? सिराकेशिकालोमच्छिद्रसंकोचात् । प्रच्छानादिभिरेव न । न तु जलौकसा नेति ।

## अत्युष्णेऽतिस्विन्नस्य चातिप्रवृत्तिः १५

तथा चात्युष्णेकालेऽतिस्विन्नाङ्गस्य चातिप्रवृत्तिर्भवति रक्तस्य । किं कारणम् ? सिराकेशिकालोमच्छिद्राणां विवृतत्त्वात् ।

## तस्मात्तत्परिवर्जयेत १६

तस्माच्छीतेऽत्युष्णेऽस्विन्नातिस्विन्नस्य रक्तमोक्षणं न कुर्यात् । परिवर्जयेदिति ।

इति श्रीजगदीशाचार्य विरचिते षट्कर्मशास्त्रे चतुर्दशो मयूखः ।

# अथ पञ्चदशो मयूखः

## अथोत्तरवस्तिविषयो वर्ण्यते १

अथात उत्तरवस्तीनां विषयो वर्ण्यतेऽस्मिन्मयूखे। किमुत्तरवस्तिरिति ? अत उच्यते—सर्वेभ्य उत्तरं पश्चादनुशासनेनोत्तरवस्तय उच्यन्ते। यतः शोधनानन्तरमेव वस्तयो ये प्रदीयन्ते मूत्रमार्गादिषु तस्मादुत्तरवस्तय इत्युच्यन्ते।

## तत्र स्नेहवस्तय एव ते बाहुल्येन २

तत्र ये खलूत्तरवस्तयो मूत्रमार्गादिषु मूत्रविकारादिषु दीयन्ते तेऽपि सर्वे स्नेहवस्तय एव बाहुल्येन भवन्ति।

## निरूहाश्चापि शोधनाद्यर्थम् ३

न हि केवलस्नेहवस्तय एवोत्तरवस्तिकर्मणि प्रयुज्यन्ते। अपितु निरूहवस्तयोऽपि तथैव। किमर्थमित्युच्यते, आभ्यन्तरव्रणदोषादिशोधनार्थमिति।

## उपवेश्य शाययित्वा वा पुरुषम् ४

तत्र पुरुषाय तु तमुपवेश्यासन्द्यादौ शाययित्वा वा शय्यायां ते वस्तयो देयाः सौकर्यात्।

## आस्थाप्यैव ५

पूर्वन्तु कोष्ठशुद्ध्यर्थमास्थाप्यैवोत्तरवस्तयो देयाइति

## मूत्रञ्च निःसार्यैव सम्यक्प्रभावाय ६

तत्र येऽपि निरूहानुवासनवस्तयोदेयास्ते पूर्वं मूत्रनिःसारकनलिकया मूत्रञ्च निःसार्यैव देयाः। न हि स्थिते मूत्रे तत्राशये, वस्तीनां सम्यक्प्रभावो भवति तस्मात्सम्यक्प्रभावायैव तथा कर्त्तव्यम्। यदर्थं क्रियते विधिरिति शेषः।

## स्नातवते पीतमांसरसदुग्धाय ७

तथा च यः स्नातो निःसारितमूत्रश्चभूतस्तस्मै मांसरसं, क्षीणबलाय, दुग्धं वा साधारणाय, पाययित्वा वस्तयोदेया इत्यवधेयम्।

## उत्तानां स्त्रियम् ८

स्त्रियं खलूत्तानां कृत्वा दद्यात् । तासां तथैव सौकर्यम् ।

## अष्टादशद्वादशवर्षाभ्यां प्रसृतार्द्धतदर्द्धप्रमाणम् ९

तत्राष्टादशवर्षायुषे प्रसृतार्द्धप्रमाणंस्नेहं दद्यात् द्वादशवर्षायुषे तदर्द्ध-प्रसृतपादमिति दद्यात् ।

## योनौ प्रसृतप्रमाणं १०

योनौ खलु प्रसृतप्रमाणं स्नेहं दद्यात् ।

## न तु बालायाः ११

वालायास्तु योनिवस्तिर्नदीयते योनिच्छिद्रभेदभयादिति ।

## गर्भाशयाय स्नाताया एव १२

तदपि गर्भाशयगतेरोगे त्वर्तुस्नाताया एव देयाः । दशदिनं यावदेव विवृतत्वाद्गर्भाशयमुखस्य तावत्कालम् । नान्यथाशये, तत्प्रभावः ।

## चतुरङ्गुलं स्थूलं योनौ १३

तत्र चतुरंगुलायामं स्थूलञ्च नेत्रं योनौ प्रवेशयेत् योनेर्वृहदाकारच्छिद्र-त्वात्स्नेहस्य वहिर्गमनं, यदि नेत्रं तनुभवति ।

## द्विषडंगुलम्मूत्रमार्गयोस्तनुच १४

तत्र स्त्रीपुरुषयोर्मूत्रमार्गयोस्तु क्रमशो द्विषडंगुलमेव प्रवेशयेत् । स्त्रीषु मूत्रमार्गस्यादीर्घत्वाद्द्वयंगुलायामदीर्घत्वाद्वा द्वयंगुलमेव नेत्रं प्रवेशयेत् पुरुष-मेढ्रे षडंगुलंप्रमाणं प्रवेशयेत् । तच्च नेत्रं तनु स्यात् तथा परिणाहत्वान्मूत्र-मार्गयोरिति शेषः ।

## वालानामंगुलमेव तनुतरञ्च १५

बालानां मूत्रमार्गे तु नेत्रमंगुलप्रमाणमेव प्रवेशयेत् तच्चनेत्रं वयस्केभ्य-स्तनुतरमेव स्यात् । नात्र ह्रस्वस्य दीर्घस्य न प्रश्नः । अपितु तनुतरत्वात् ह्रस्वमेव शोभते तदिति रहस्यम् ।

द्वादशदशैकांगुलान्येव तनुतनुतरतनुतमानि नरनारीबालेभ्यो नेत्राणि १६

तत्र नरेभ्यो नेत्राणि द्वादशांगुलायामप्रमाणानि तथा च तनूनि स्युः। नारीभ्यस्तु दशांगुलायामप्रमाणानि तनुतराणि स्युः। बालेभ्यस्तु नेत्राण्येकांगुलप्रमाणान्येव स्युस्तनुतमानि च। अतिप्रवेशाद्दारणभयात्सावधानत्वादेकांगुलमेव प्रशस्ततरं भवति बालानां कृते।

माषमुद्गसर्षपच्छिद्राण्येव १७

तत्रनेत्राणां छिद्राणि तु माषमुद्गसर्षपप्रमाणानि स्युः।

कृतकर्णिकानि च १८

तानि कर्णिकायुतानि स्युर्येन मार्गेषुपीडा न स्यात्।

प्रसृतार्द्धप्रसृतनिरूहानुवासनमात्रे १९

तत्रोत्तरवस्तिषु देयक्वाथमात्रा तु प्रसृतमात्रप्रमाणमेव स्यात्। स्नेहमात्रा तु तदर्द्ध प्रसृतार्द्धमिति यावद्देया भवति।

इति श्रीजगदीशाचार्य विरचिते षट्कर्मशास्त्रे पञ्चदशो मयूखः

# अथ षोडशो महामयूखः

महत्त्वान्महामयूखः १

ननु सर्वे मयूखाइति संज्ञिताः भागाः। कर्मराजविषयकत्वाच्च मयूखराजोप्युक्त एव अथ किमयं महामयूखइति। तत्रोच्यते बहूनामवशिष्टावश्यकविषयाणां ज्ञेयानां समाहारत्वाद्वृहत्वाच्च सर्वेभ्यो महानयं भागः। महत्वान्महामयूखोऽयं संज्ञित इति। सर्वकर्मविधानपूर्णत्वाच्च।

सामान्येन कर्मोपदेशो वातव्याधौ २

तत्र सामान्येन वातव्याधिमाश्रित्योदाह्रियते सम्पूर्णविधिविज्ञानाय। तत्र वातव्याधिपीडितं रोगिणमनुकूलतिथ्यादीनि दृष्ट्वा मासञ्च दृष्ट्वा दीप्ताग्नेः, स्वतः, कर्मणा वा प्रातःकालेऽश्वगन्धादितैलेन, क्षीरवलादितैलेना

मध्यपाकिना येनकेनापि वातहरतैलेन यथोपदिश्यमानाभ्यङ्गविधिनाभ्यङ्गः सर्वगात्रे कार्यः। वाह्यस्नेहनार्थम्। ततो होरानन्तरं स्नानं कारयेत्। तदनन्तरं पयसा पयसि निक्षिप्य वा त्रिफला घृतं केवलं वोष्णीकृत्य प्रसृतस्य दशमं भागं यावत्, पाययेत्। पानाय घृतं मृदुपाकि स्यात्। किंचित्कालानन्तरं कोष्णं जलं दद्यात् पुनः पुनश्च। मध्याह्ने मुद्गसूपेन सह गोधूमचूर्णकरपट्टिकाःप्रदेयाः। सूपस्तु घृतजीरकाभ्यां संस्कृतः स्यात्। सायंकाले किञ्चिद्रात्रौगतायां वा पयसा शाल्योदनं भोजयेत्। इति प्रथम दिन विधानं, द्वितीय दिने तथैवाभ्यङ्गं, घृतपानन्तु पयसि प्रथमदिनाद्द्विगुणं कारयेत, शेषं पूर्ववत्। तृतीयदिने तु घृतपानमेव वर्धयेत्त्रिगुणं चतुर्गुणं वा। शेषं पूर्ववत्। चतुर्थ दिनेऽपि तथैव। घृतपानमेव प्रसृतार्द्धं कारयेत्। पञ्चमदिनेऽपि प्रसृतार्द्धं शेषं पूर्ववदभ्यङ्गभोजनादि। यदि सम्यक्स्निग्धलक्षणानि न स्युः सप्तदिनानि यावत् घृतं पाययेदभ्यङ्गादीनि च।

ततो वातहरकोष्ठौषधैः सिद्धे क्वाथे दशद्रोणप्रमाणे प्रातःकाले सूर्योदयानन्तरमेव सद्यः सर्वाङ्गाभ्यङ्गं कृत्वा निमज्जितनाभिप्रदेशं रोगिणमवगाहस्वेदविधिना स्वेदयेत्। स्वेदनाय क्वाथस्तु गात्रसह्योष्णः स्यादिति। होरामात्रमेव स्वेदनकालः। सम्यक्स्विन्नलक्षणानि वा दृष्ट्वा ततः पूर्वमपि निःसारयेत्क्वाथात्। स्वेदनविधिश्चायं बृहद्द्रोण्याकारस्नानपात्रविशेषे क्रियते। न च रोगिणं सद्य एव स्वच्छजलेन स्नापयेत्। अपि त्वर्द्धहोरानन्तरमेव। सुशीते जाते शरीरे। ततः स्वच्छजलेन स्नानं कारयित्वा घृतविहीनं पयः पाययेत्। भोजनन्तु पूर्ववदेव। इत्थं सप्ताहं यावत्स्वेदयित्वा वमनं दद्यात्। तत्राग्रिमे दिने सद्यः स्निग्धस्विन्नाय मदनफलचूर्णं प्रसृतस्य विंशं भागं मधुसैंधवाभ्यामवलेहयेत्। यष्टिजलं क्वाथमिति च प्रसृतद्वयप्रमाणं पाययेत्। होरापादार्द्धान्ते पय इक्षुरसं वा पाययेदाकण्ठम्। ततो वेगान् प्रतीक्षेत। प्रतिवेगानन्तरं लवणोदकमीषदुष्णं पाययेत। सर्वपीतमात्रानिर्हरणानन्तरं पित्तञ्च पश्येद्वमने। सर्वतोऽन्ते उद्गारमात्रवेगे विश्रामयेत्। ततः पय एव कोष्णं मध्याह्ने देयम्। ततो यथाशुद्धि पेयादिक्रमः। पेयादिक्रमान्ते पुनर्वमनं दद्यात्। पुनश्च पेयादिक्रमः। इति वमनद्वयं दत्वा सप्तदिनानन्तरं पेयादिक्रमान्ते इत्यर्थः विरेचयेत्। विरेचनात्पूर्वं त्वाहारे पित्तोत्क्लेशनार्थमम्ललवणकटुकप्रायमाहारं दद्यात्। उष्णवीर्यञ्च भोजनम्। ततः प्रातःकाले सद्योऽभ्यक्तगात्राय स्विन्नाय च त्रिवृच्चूर्णं तावदेव प्रमाणं सैंधवशुण्ठीचूर्णाभ्यां सह, मधुना घृतेन चावलेहयेत्। ततो यवागूं पाययेत्। ततः प्रतीक्षेत होराद्वय पर्यन्तम्। प्रतिवेगे कोष्णजलं पाययेत्। अप्रवृत्तं खलु सुधाकल्पघृतं पाययेत्किंचित्। आसूर्यास्तमपि वेगानामागमः सम्भवः। ततश्च सम्यग्विरिक्तं पेयादिक्रमेणोपचरेत् पूर्णाहारानन्तरं समर्थाय पुनः तथैव

विधिना विरेचयेत् । सम्यग्विरिक्तलक्षणानि दृष्ट्वा पेयादिक्रमान्ते पुनः कृते, यथादोषाय सप्तदिनानन्तरमेव योगवस्तीन् कालवस्तीन् कर्मवस्तीन् वा दद्याद्यथोपदिष्टान्पूर्वान् । तत्रानुवासने क्षीरबलाद्यश्वगन्धादितैलेषु किमपि वातहरं विचार्य प्रयोजयेत् । निरूहणवस्तौ तु, एरण्डमूलादिक्वाथं वा किमप्यन्यं वा साधयित्वा प्रयोजयेत् । कतिपय योगानग्रे लिखिष्यामि ततो वस्तिकालानन्तरं पुनः पेयादिक्रमो विधेयः । वस्तिकाले तु यथा पूर्वोद्दिष्टं भोजनादिकं कारयेत् । परिहारस्तु द्विगुणकालं यावदिति ।

ततः शिरोवस्त्या, लेपनाभ्यङ्गादिभिरुत्तमाङ्गं संस्नेह्यावगाहस्वेदं कृत्वा कटफलसिद्धतैलं चूर्णं वा नस्यं दद्यात् ततः प्रतीक्षेत । कटुतुम्बी स्वरसं वावपीड्य दद्यात् । जीमूतकस्वरसः (जहरतोरई इति) तु यावद्दिनं शिरो विरेचयति । अनिष्फलञ्चैतन्नस्यमस्ति । ततः पेयादिक्रमो हीनशुद्ध्यनुसारेणैव । पर्याप्तत्वात् । पुनश्च वा शिरोविरेचयेत् । ततस्तु सम्यग्रूपेणैरण्डपाकयोगराजगुग्गुलूनां व्यवस्था सेवनार्थं कुर्य्यात् । यदिचेदावश्यकता स्यात् पुनः स्वेदनं कार्यं सप्ताहत्रयपर्यन्तम् । इतिनिर्देशः । तत्र वातरक्ते कुष्ठादिषु तु रक्तमोक्षणमपि कार्यम् इति सामान्येन कर्मणां विधिरुक्ता वेदितव्या । यदि चेन्मूत्रादिविकाराः योनिदोषाश्चेदुत्तरवस्तयोऽपि प्रदेया इति । वस्तिदाहे तु शीतवस्तयो देयाः । अनागते तु वस्तौ प्रपीड्य नाभिं भूयो वा शोधनवस्तिना निर्हरेत् । क्वाथादिभिरिति ।

## तैललेपनं लेपः ३

तत्र क्षीरबलादितैलानां सर्वाङ्गे क्वचिदेकदेशे वा लेपनमात्रमेव लेपः। न तत्र किंचिदपि करेण सबलेनावपीड्यते ।

## अनुलोमोऽभ्यंगः ४

तत्र कोष्णं क्षीरबलादि तैलं किमपि वान्यद्गृहीत्वा लौहपात्रे, सर्वाङ्गावयवेषु केवलमूर्द्ध्वाङ्गं परित्यज्य सबलेन करेणानुलोमाभ्यञ्जनमभ्यङ्गः उच्यते। तत्र पूर्वं खलु शिरसि गलपर्यन्तं, शीतं तदेवतैलं देयम् । ततः सर्वाङ्गेऽभ्यङ्गात्पूर्वमखिलशरीरेऽनुलोमगत्या तैलस्य साधारणो लेपो विधेयः । पूर्वं हस्तयोः ततः पिण्डे ततः पादयोश्च । एषुहस्तपिण्डपादेषु तु कोष्णमेव तैलं लेपयेत् । ततो रोगिणमुपवेश्य मध्यपिण्डेऽनुलोमगत्याभ्यङ्गं कुर्यात् । पुनः पुनः पृष्ठे शाययित्वा सम्पूर्णशरीरे पादपर्यन्तमभ्यङ्गं कुर्यात् । पुनः दक्षिणपार्श्वे शाययित्वा परिवर्त्येत्यर्थः, सर्वाङ्गानां वामपार्श्वगतानामभ्यङ्गः कार्यः । सर्वेषु च सन्धिस्थलेषु स्कन्धकूर्परवंक्षणजानुपार्ष्ण्यादिषु यथा संधिगतमांसपेशीनामुदयास्तौ मण्डलाकारगत्या हस्तचालनेनाभ्यङ्गः कार्यः सर्वदा सर्वत्र । ततः उदरे शाययित्वा आगलात्पृष्ठे कटौ नितम्बयोः पादयोश्च

पार्ष्णिपर्यन्तमभ्यङ्गः कार्यः पुनश्च वामपार्श्वे शाययित्वा दक्षिणाङ्गेषु गलात्पार्ष्णिपर्यन्तम् । ततः पृष्ठे शाययित्वोरसि नाभौ वंक्षणप्रदेशे पादयोश्चांगुष्ठपर्यन्तमभ्यङ्गः कार्यः । पुनः उपवेश्य सर्वाङ्गाभ्यंगं कृत्वा विश्रामयेत् । अभ्यङ्गकालस्तु होरार्द्ध एव । विश्राममपि तावदेव कारयित्वा ततः कोष्णजलेन स्नापयेत् । पुनः शय्यास्थितिः । इत्थं सप्तसु स्थितिसु कारयेदभ्यङ्गम् । इत्यभ्यङ्गविधिरुक्ता ।

## प्रतिलोममुद्वर्तनम् ५

तत्र ये चोपक्रमा अभ्यङ्गे त एवोद्वर्तने, पूर्वं शिरसि शीतमेव क्षीरबलादिकं तैलं दद्यात् ततः सप्तस्वेव स्थितिषु तथैवाभ्यङ्ग कार्यः । अन्तरन्त्विदमेव यदुद्वर्तने प्रतिलोमगत्याभ्यङ्गः क्रियते । पादाभ्यामारभ्य गलपर्यन्तम् । विपरीताभ्यङ्गः इत्यर्थः । सन्धिस्थलेषु तु तथैव मण्डलाकारमेव कुर्यात् । विधिनाऽनेन तु सर्वतोऽधिकः स्नेहः शरीराभ्यन्तरे प्रविशति किन्तु कष्टप्रदंञ्चैतदुद्वर्तनं भवति । अतोऽभ्यङ्ग एव प्रायः क्रियते ।

## पादाभ्यामाहननं पादाघातः ६

यत्तु पादैराहत्याभ्यंगः क्रियते स तु चतुर्थो विधिः केरलीयः । मल्लादिभ्यस्तु स विधिरनन्योपायत्वात् ।

## सलवणस्नेहपानाभ्यङ्गौ सद्यःस्नेहनम् ७

तत्र सद्यस्नेहनमाशुस्नेहनं वा कथं कर्त्तव्यमित्याकांक्षायामुच्यते, सलवणस्नेहः पीतो वाऽभ्यक्तः सूक्ष्मत्वादरूक्षत्वाद्दोषोच्छेदकत्वाद्व्यवायित्वाच्च लवणस्य, शीघ्रमेव स्नेहयति ।

## शिरोवस्तिश्चोत्तमाङ्गस्य ८

तत्र शिरोवस्तिरपि स्नेहनकर्मणि क्रियत उत्तमाङ्गानां स्नेहनाय । तत्र शिरः पूर्वं मुण्डं कारयित्वा नापितेन, ततो जलसिक्तमाषं पिष्ट्वा शिरश्चर्मपट्टेन परिवेष्टय सम्पिष्टमाषपिण्डेन सन्धिस्थलं परितः पिधाय किंचिदुष्णेन शीतेनैव वा सिद्धेन तैलेन पूरयेद्गर्तम् । निस्तब्धाङ्गो निश्चेष्टश्च स्याद्रोगी समुपविष्टः । होरानन्तरमेकपार्श्वतो स्नेहं गृह्णीयात् पात्रे । शिरश्च स्वच्छंकृत्वा शाययेद्रोगिणं विश्रामाय । अद्यत्वे खलु रबरनिर्यासनिर्मित पट्टेन परिवेष्टय तैलेन पूर्यते । ननु किमिदं वस्तिकर्मेत्युच्यते ? इति चेदुच्यते पूर्वाचार्यास्तु गवादीनां वस्तीनेव मध्यतः कर्तयित्वा शिरोवेष्टनार्थं पट्टानां निर्माणं कारयन्ति स्म । तस्माद्वस्तिसाधनसाध्यत्वाद्वस्तिरित्यभिधानम् । तदेतद्वृंहणमपि भवति ।

## पृष्ठपार्श्वोरः कट्युदरवस्तयोऽपि ९

तत्र पृष्ठवस्तिः पार्श्ववस्तिः उरोवस्तिः कटिवस्तिः उदरवस्तिश्च स्नेहनार्थं बृंहणार्थञ्च क्रियन्त तत्तत्स्थानेषु। तेषां विधिरयम्। जल-षिक्तमाषान्पिष्ट्वा गोधूमचूर्णं वा जलेन पिण्डीकृत्य पृष्ठादिषु स्नेह्यस्थलेषु मण्डलाकारं माषादिपिण्डेन चतुरंगुलोच्चं प्राचीरं परितो विरच्य कोष्णेन तैलेन गर्तं पूरयेत्। होरान्ते तैलं निर्हरेत्। स्थानशुद्धिश्च वस्त्रेण कुर्यात्। इतिविधिः तत्रवस्तावसाधनीभूतेऽपि वस्तिरितिनामकरणं स्नेहेन, स्नेहनबृंहण-करत्वादुपलक्षणमात्रमेव। न च वस्तुतो वस्तिकर्म इति।

## शिरोधारा च १०

तत्र शिरोधारा च। शिरः स्नेहधाराऽपि स्नेहनबृंहणायैव क्रियते। विधिरयं केरलीयः। बहूपयोगी च। तत्र काष्ठनिर्मिते द्रोणीयन्त्रे रोगिणं साधारणेनाभ्यक्तगात्रं पृष्ठे शाययित्वा, नेत्रे, वस्त्रपट्टेन पिधाय बद्ध्वा च तस्य ललाटे दक्षिणवामपार्श्वगतकुड्यावद्धरज्जुमध्यावलम्बितस्नेहपूरितलौहपात्र-गताधश्छिद्रेण सर्वतिकेण स्नेहस्य धारा पातनीया निरन्तरम्। धारापातन-कालस्तु होरामात्रमेव। तत्र शिरस्तले द्रोणीगतच्छिद्रेणाधः संचितं स्नेहं, पुनः पुनः संजाते रिक्तेऽवलम्बितपात्रे प्रक्षिपेत्। येन निरन्तरं धारा पतेत्। तेन च विंशतिप्रसृतेन तैलेनैव कार्यं सिद्ध्यति। न च तावत्तैलं कोऽपि क्रेतुं शक्तो, यावत्, होरापर्यन्तं धारा पतेत्। ततः निवृत्तकर्मणस्तु शिरः शोधनं कृत्वा नेत्रपट्टं पृथक्कुर्यादिति। इति शिरोधारा विधिः। वर्त्तिकया शनैः शनै धारा पततीति शेषः।

## तक्रधारा च ११

तत्र स्नेहनप्रकरणे यो विधिः स्नेहधारायाः शिरःस्नेहधारानाम्ना निर्दिष्टा स एव विधिरत्रापि। केरलप्रदेशीयोऽयमुपक्रमविशेषः। न चाय-मुपक्रमः षट्कर्मसु केनापि गृह्यते स्नेहनत्वादिगुणाभावात्। तत्रापि शैत्यजनकत्वात्तर्पकत्वाच्चोन्मत्तादिमस्तिष्करोगिषु निद्रानाशे शिरोदाहे भ्रमादौ च विशेषोपयोगित्वाद्ग्राह्य एव। भारतीय प्रधानमन्त्रिणः स्वर्गीयस्श्रीमतो जवाहरलाल नेहरू महोदयस्य विश्वविख्यातयशसः वैक्रमाब्दे २००० वार्द्धक्ये राज्यकार्यभारातिशयेन चिन्तया निद्राप्रणाशे सर्वाधुनिक-चिकित्सानैष्फल्ये जामनगरीयायुर्वेदानुसन्धानकेन्द्रीयपञ्चकर्मविभागाध्यक्षके-रलीयच्छ्रीकुरूपमहाशयैस्तक्रधारोपक्रमेणैव सिद्धिः प्राप्तः। होरा-द्वयमात्रमपि रात्रावेव केवलायांनिद्रितस्य षड्ढोरापर्यन्तं यच्च सम्यक्स्वास्थ्य-लक्षणं, निद्रायाता नित्यमिति। विधिस्तु स एव यः पूर्वोक्तः। द्रव्येतु

तक्रमामलाजलञ्च सममात्रायां भवेताम्। मात्रा तु सर्वा विंशतिप्रसृतं यावत्।

## धान्याम्लधाराऽपि १२

तथैव धान्याम्लधाराऽपि कार्या विशेशतः पित्तोन्मादे। काञ्जी, धान्याम्लमुच्यते।

## कर्णपूरणञ्च १३

तत्र कर्णयोः स्नेहपूरणमपि स्नेहनवृंहणं भवति। तत्र कर्णविवरयो र्धारया विल्वतैलादितैलप्रक्षेपः कर्णपूरणमुच्यते।

## आश्च्योतनमपि १४

आश्च्योतनमपि स्नेहनवृंहणाय भवति। तत्र चक्षुष्यौषधसिद्धतैलस्य निम्बपत्रस्वरसादिव बिन्दुभिर्नेत्रयोः पातनमाश्च्योतनमुच्यते।

## गण्डूषोऽपि १५

मुखे प्रक्षिप्य तैलस्य गण्डूषः क्रियते। सोऽपि स्नेहनवृंहणो भवति।

## अञ्जनमपि १६

अञ्जनमपि तथैव भवति। शलाकया स्नेहलिप्तया नेत्रयोरञ्जनदान-विधिना स्नेहलेपनमञ्जनमुच्यते।

## नस्यमपि १७

नस्यमपि तथा—तत्र षड्विन्दुतैलादेर्नासाच्छिद्रयोर्दानं नस्यमुच्यते।

## संकरस्वेदविधिः १८

तत्र प्रस्तर लौहादिखण्डान् सम्यगुष्णीकृत्य वस्त्रान्तरितान् कृत्वा शनैः शनैः स्वेदयेत्स्वेद्याङ्गानि। अवस्त्रान्तरितैरपि ग्राह्यसह्योष्णैः कर्तुं शक्यते स्वेदनम्। तदिदं रुक्षस्वेदनम् श्लैष्मिकविकारेषु वातिकेषु विकारेषु, सांस्थानिकेषु स्वेद्याङ्गं स्नेहेनाभ्यज्य च कर्तुं शक्यते इति क्लिष्ट-पिण्डस्वेदविधिरूक्तः।

## स्निग्धतरलपिण्डस्वेदाः वातिकेष्वेव १९

तत्र स्निग्धतरलपिण्डैस्तु वातिकेष्वेव विकारेषु क्रियन्ते स्वेदाः। तेषु कतिपयस्वेदानां विधयो लिख्यन्ते।

## षष्टिशालिपिण्डस्वेदविधिः २०

तत्र पूर्वमुपकरणसामग्रयश्चोच्यन्ते। क्षीरवला तैलम् १/२ पलम्; दुग्धम् २४ पलानि; षष्टिशालयः १२ पलानि; वस्त्राणि ८, वर्गहस्तानि वलामूलम् १२ पलानि; आमलकी पिण्डम् १, पलद्वयस्य।

तत्र पूर्वं द्वादशपलवलामूलानां चतुर्गुणे तोये क्वाथे कृते द्वादश पलावशिष्टे चतुर्विंशतिपलदुग्धं मिश्रितं कृत्वा तस्यार्द्धेऽष्टादशपलप्रमाणे द्रवे द्वादशपलषष्टिशालीन्पचेत्। पक्वे भक्तजातेऽष्टौ भागान् कृत्वा वस्त्र-खण्डेषुवध्नीयात्। ततोऽवशिष्टाष्टादशपलं द्रवं नव-नवपलानि कृत्वा पात्रद्वये वृहन्मुखे प्रक्षिप्य प्रत्येकस्मिन् चत्वारि-चत्वारि वस्त्रान्तरितानि भक्तपिण्डानि प्रक्षिप्याङ्गारेषु स्थापयेदुष्णीकर्तुम्। इतस्तु रोगिणः साधारणसर्वाङ्गाभ्यङ्गं कृत्वा क्षीरवलातैलेन रोगिणो व्रह्मरन्ध्रे आमला-पिण्डं दध्नापिष्टंसंस्थाप्य तन्मध्ये व्रह्मरन्ध्रोपरि गर्तं कृत्वांगुष्ठेन, क्षीरवला तैलेन परिपूर्य, पल्लवेन पिधाय च वस्त्रपट्टेन दृढं वध्नीत्। उपक्रमोऽयं तलधारणमित्युच्यते अनेन खलु स्वेदनकाले मस्तिष्के तापस्य प्रभावो न भवति। वहुशीतलयति मस्तिष्कमिदम्। तत्पश्चादाङ्गारेभ्य एकं पात्रं गृहीत्वा उष्णीभूतैर्वस्त्रान्तरितैः भक्तपिण्डैरभ्यङ्गविधिनैव सप्तसु स्थितिषु वामदक्षिणोभयपार्श्वगताभ्यक्तृद्वयेन सेवकेनोष्णपिण्डैरङ्गेषु घर्षणं कारयेत्। शीतं जातं पुनरुष्णीकृत्य होरापर्यन्तं स्वेदयेत्। पात्रद्वयं तु निरन्तर स्वेदन-कर्मप्रचलनार्थमेव। वस्त्रेभ्यः ओदनो निःसृत्य वस्त्राच्छिद्रैः, सर्वाङ्गेषु लिप्यते। तमपाकृत्यान्ते पुनः किञ्चिदभ्यंगं कृत्वा तैलेन, ततो विश्राम्य कोष्णजलेन स्नापयेदिति विधिरुक्ता।

## गोधूमपिण्डस्वेदविधिः २१

गोधूमचूर्णं क्वाथे पक्वं कृत्वा षष्टिशालिपिण्डस्वेदोक्तविधिनैवो-पक्रमेत्।

## शाल्वणपिण्डस्वेदविधिः २२

सुश्रुते वातव्याधिचिकित्सायांचतुर्थाऽध्याये यथोक्तोऽयं विधिः।

काकोल्यादि गणौषधचूर्णम् २ पले; विदारिगन्धादिगणौषधचूर्णम्

२ पले; आनूपौदकमांस, गोधूम, शालि पिण्डं वा १२ पलानि; धान्यम्लं (काञ्जी) सर्वाम्लानि वा १६ पलानि; वातघ्नतैलानि, महास्नेहो वा २ पले; लवणम् १ पलम्।

षष्टिशालिपिण्डस्वेदविधिनैव धान्याम्ले पक्त्वा लवणं प्रक्षिप्य तथैव स्वेदनं कर्त्तव्यम्। लवणं तीव्रं स्पष्टं स्यात्। तस्मादेवशाल्वण इत्युच्यते। स्पष्टलवण इत्यर्थः क्रियते। पूर्वपाणिनीयोऽयं शब्दः शाल्वण इति मे मतिः।

## पत्रपिण्डस्वेदविधिः २३

एरण्ड पत्राणि १ पलम्; क्षीरबलातैलम् १ पलम्; वस्त्रखण्डम् १ वर्ग हस्तम्।

तत्र पूर्वं खलु तान्येरण्डपत्राणि कर्त्र्या खण्डयित्वांगुलप्रमाणखण्डेषु, तैले भर्जयेत्। स्विन्नानि जातानि तानि पत्रखण्डानि वस्त्रे वद्ध्वा साधारणाभ्यक्तगात्रस्य शरीरे घर्षयेदुष्णतैले प्रक्षिप्य प्रक्षिप्य। घर्षणन्तु तथैवाभ्यंगविधिना सप्तसु स्थितिसु अनुलोमगत्या सन्धिस्थलेषु मण्डलाकारगत्याकर्त्तव्यम्। होरापर्यन्तमेव। शिरसि त्वामलकीतलधारणं कारयेदेव पूर्ववत्। इति सर्वविधसंकरस्वेद उक्तो वेदितव्यः।

## प्रस्तरस्वेदविधिः २४

तत्र शालीनां गोधूमस्य वा विलेपीं पक्त्वा प्रस्तरे पञ्चांगुलोच्चं प्रसार्य, एरण्डपत्रैराच्छाद्य सर्वां विलेपीं, तस्या उपरि रोगिणं शाययित्वाऽभ्यक्तं, कम्वलेनाच्छाद्य होरापर्यन्तं स्वेदयेदिति द्वौ तापस्वेदौ।

## उपनाहस्वेदविधिः २५

तत्र षष्टिशालिगोधूमादीनां विलेपीं कृत्वा स्वेद्यांगायामव्यायामतुल्यप्रमाणे वस्त्रखण्डे तां विलेपीं प्रसार्य सह्योष्णे जाते द्रव्ये विलेपीलिप्तपटखण्डं स्वेद्यांगे संस्थाप्य परिवेष्टच वा दृढं वध्नीत्। सम्यक् शीते जाते मुञ्चेत्। दिवा वद्ध्वा सायंकाले, रात्रौ वद्ध्वा प्रातः काले मुञ्चेत्।

## पत्रोपनाहस्वेदविधिः २६

तथैवैरण्डनिर्गुण्डीवासादिपत्राणि तैले भर्जयित्वा स्विन्नानि जातानि, वा तैलेन लेपयित्वा वृहत्पत्राणिचेत्, तत उष्णीकृतानि स्वेद्यांगे संस्थाप्य वस्त्रेण वध्नीत् दृढम्। संजातेषु शीतेषु मुञ्चेदिति पत्रोपनाहः। सर्वेचोपनाहाः स्वभ्यक्तस्यैव क्रियन्ते।

## शाल्वणोपनाहस्वेदविधिः २७

शाल्वणपिण्डस्वेदोक्तकाकोल्यादिगणौषधचूर्णं विदारिगंधादिगणौषध-चूर्णञ्च गोधूमचूर्णे मिश्रयित्वा स्पष्टलवणञ्च दत्वा तैले भर्जयित्वा धान्याम्ले पक्त्वा विलेपीं कृत्वा वस्त्रखण्डे प्रसार्य स्वेद्यांगे संस्थाप्य परिवेष्टय वा यथाङ्गं दृढं वद्ध्वा स्वेदयेत् । शीतले जाते मुञ्चेत् इत्युपनाहस्वेदविधिः ।

## अवगाहस्वेदविधिः २८

तत्र विंशतिद्रोणजलं सम्यगुष्णीकृत्यचतुष्प्रसृतं लवणं प्रक्षिप्य सह्योष्णे जाते द्रोण्यां कटाहे वा प्रक्षिप्य तं जलं स्वभ्यक्तगात्रं रोगिणं प्रवेशयेत् । उपवेश्य च रोगिणं तस्मिन्नुपदिशेच्च तं यत्स्वहस्ताभ्यां द्रवं स्कन्धपर्यन्तं पुनः पुनः प्रक्षिपेदुत्तमांगं परित्यज्य स्नानं कुर्यात् स्वेदञ्चागतं वस्त्रेण शोषयेत्पुनः पुनः । होरापर्यन्तं स्वेदनावधिः । यथारोगं काष्ठाद्यौषधीनां वातहरादीनां क्वाथेऽपि द्रोणीगते स्वेदयेत् । सम्यक्शीते जाते स मुञ्चेत् द्रोणीम् ।

## परिषेकस्वेदविधिः २९

तत्राभ्यक्तगात्रस्य वातहराद्यौषधसिद्धक्वाथादिधाराभिः परिषिञ्च्य परिषिञ्च्य सह्योष्णैः स्वेदयेत् । न चोत्तमांगमिति ध्येयम् । कालस्तु स एव ।

## स्नेहधारास्वेदविधिः ३०

तत्र स्वभ्यक्तगात्रस्य रोगिणः शिरसि चामलकीतलं पूर्वोक्तविधिना वद्ध्वा क्षीरवलादितैलं द्वादशप्रसृतं गृहीत्वा पात्रे चोष्णीकृत्य वस्त्रखण्डमाद्री-कृत्य पुनः पुनरुत्तमांगं विहाय शेषांगे च्यावयेत्तैलं, वस्त्रं प्रपीडच प्रपीडच धाराभिः तैलं पातयन्सर्वशरीरेऽभ्यंगरीत्या सप्तसु स्थितिषु परिवर्त्य परिवर्त्य च स्वेदनं कार्यम् । स्वेदनकालस्तु होरामात्रमेव । पश्चात्तैलं परिशोष्या-मलकीतलञ्च पृथक्कृत्य तदंगे शीते जाते कोष्णजलेन स्नापयेत् । स्नेहधारा विशेषतया केरलप्रदेशे प्रायः क्रियते । इति द्रवस्वेदविधय उक्ताः ।

## होलाकोष्मस्वेदविधिः ३१

तत्र कटाहे वन्योपलान्प्रदीप्य निर्धूमे जातेऽग्नौ शय्यायाः नीचैः-संस्थाप्य शय्याया उपरि रोगिणं शाययित्वा स्वभ्क्तगात्रं निवाते स्वेदयेत् । होरापर्यन्तमिति होलाकविधिः ।

## कूपोष्मस्वेदविधिः ३२

तत्र शय्यायामव्यायामतुल्यं गर्तं खनित्वा निर्धूमवन्योपलैः परिपूर्य तदुपरि वस्त्राच्छादितशय्यायां शयानं निवाते स्वेदयेदिति स्वभ्यक्तमैव ।

## कुटीस्वेदविधिः ३३

तत्र मण्डलाकारां घनभित्तिं कुटीं कृत्वा छिद्ररहितां मध्ये, गर्भे, शय्यां संस्थाप्य वस्त्रेणाच्छाद्य रोगिणं स्वभ्यक्तं शाययित्वा परितः निर्धूमांगारान्स्थाने स्थाने प्रक्षिप्य पञ्चाग्निताप इव तं स्वेदयेत् । स एव स्वेदनकालः ।

## कर्षुस्वेदविधिः ३४

तत्र कुम्भवत्संवृतमुखं गर्तं कृत्वा निर्धूमांगारान्प्रक्षिप्य तस्योपरि शय्यायां शयानं स्वभ्यक्तगात्रं स्वेदयेत् । होरामात्रम् ।

## जेन्ताकस्वेदविधिः ३५

तत्र जलाशयस्य दक्षिणपश्चिमे तटे पूर्वाभिमुखीं सच्छिद्रां कुटीं कृत्वा मध्ये च तन्दूराख्यं रिक्तोदरस्तम्भं कृत्वा निर्धूमाग्निपूर्णं कृत्वा वा स्तम्भोदरे काष्ठान्प्रक्षिप्य प्रदीपयेत् । संजाते निर्धूमेऽग्नौ प्रवेशयेद्रोगिण-मभ्यक्तं कुट्यां तेन सम्यक् स्विद्यति । न च सद्य एव तं वहिर्निःसारयेदपि तु सुशीते जाते गृहे निःसारयेत्ततः । अन्यथा प्राणविगमभय एव इति पञ्चविधोष्मस्वेदा उक्ताः ।

## नाडीस्वेदविधिः ३६

तत्र वातहराद्यौषधीन् घटे प्रक्षिप्य चतुर्गुणं तोयञ्च प्रक्षिप्याहोरात्रं स्थापयेत् । ततोऽपरदिनेऽग्नौ निधाय हस्तपञ्चायामांगुष्ठप्रमाणपरिणाह-कनिष्ठिकाप्रमाणच्छिद्रात्मिकां नलिकां घटमुखे सच्छिद्रशरावे संयोज्य मृदा-गोधूमचूर्णपिण्डेन वावलिप्य यथा, मुखाद्बाष्पनिःसरणं न भवेत्तथा कृत्वा स्वेद्यांगमभ्यज्य नलिकामुखागतवाष्पेण स्वेदयेत् । ह्रस्वनलिका चेत्स्यात् वहूष्णत्वाद्बाष्पस्यांगदाहः स्यात् । दीर्घया न दह्यते । इति नाडीस्वेदः ।

## कुम्भीकस्वेदविधिः ३७

गृहे शय्यायां शयानस्य स्वभ्यक्तगात्रस्य वातघ्नौषधसिद्धक्वाथपूरित-कुम्भं शय्यायास्तले संस्थाप्याग्निदग्धान् प्रस्तरलौहादिखण्डान् पातयेन्निरन्तरं ततो निःसृतवाष्पेण च स्वेदयेत् । शीतान्खण्डान्निःसार्य पुनः पुनरुष्णीकृत्य पातयेद्धोरापर्यन्तमेवेति ।

## अश्मघनस्वेदविधिः ३८

गर्तं कृत्वा निर्धूमांगारान्प्रक्षिप्य परिपूर्य चांगारैरुपरि शिलां संस्थाप्य तदुपरि शय्यायां शाययित्वा रोगिणं संजातायां शिलायामुष्णायां तोयं प्रक्षिपेद्धस्तेन। तन्निःसृतवाष्पेण स्वेदयेदभ्यक्तगात्रम्।

## भूस्वेदविधिः ३९

भर्जनगर्तमिव सुरङ्गं भूमिगतविवरं हस्तप्रमाणाधो, ऽर्द्धहस्तप्रमाणाधो वा मुखद्वयात्मकं कृत्वा दूरतस्ततोऽग्निं प्रज्वालयेत्। संजातायां भूमौ बहूष्णायामुपरि शय्याशयानं स्वेदयेत्तोयप्रक्षेपेण पुनरश्मघनेनेवेति। इति वाष्पस्वेदाः। इति चतुर्दशविधस्वेदाः।

## अनग्निस्वेदविधिः ४०

तत्र यः खल्वनग्निस्वेद्यः समर्थश्चेद् दण्डकव्यायामेन धावनेनासनादिभिश्च स्वेद्यः। अत्यन्तोष्णगृहे गर्भगृहे वा निवाते प्रवेशयेत् कम्बलादिभिरौर्णवस्त्रैराच्छाद्य वा निवाते शाययेत्। आतपे वा शाययेत कृतव्यायामं वा किञ्चिद्विश्रान्तं गुरुप्रावरणेनाच्छाद्यातपे शाययेत् तेनाशु स्विद्यति। तत्रेमेऽपि सर्वे स्वभ्यक्तगात्रा एव स्वेद्याः। केवलचर्मपट्टेन वस्त्रपट्टेन वा बन्धनमुपनाहोऽपिदशमः।

## वमनविधिः ४१

तत्र वमनविधिरूच्यते। आसन्द्यादौ तूपविष्टमेव वामयेत्। न भूमावुपविष्टम्। न च शयानमपि। किमर्थमित्युच्यते। असम्यग्वेगागमत्वात्, न हि सभ्यग्वेगानामागमो भवति तथाकृते। शयानस्य तु शय्यायामेव तदुपर्येव च मलं निर्हृतं पतति, मालिन्यं तेन जायते। न च वहुनताग्रं, न च बहून्नतशिरसं न च तिर्यक्पार्श्वमुखञ्च वामयेत्। बहुनताग्रत्वे शिरः कोष्ठयोः पीडा जायते। बहून्नतशिरसि तु पृष्ठहृदययोः पीडा जायते। तिर्यक्पार्श्वमुखस्य पार्श्वहृदयजत्रुसन्धेरुपरिष्टाच्च भवति पीडेति तस्मात्सुखकरासने किंचिन्नतशिरसं धनुरिवोपवेश्यैव वामयेदिति। यदि चेद्वेगागमे विलम्बः शैथिल्यं वा तदा कमलनालं सस्वच्छनखमंगुलिं तर्जनीं वा कण्ठे प्रवेश्य वामयेदिति। विस्तरः।

## विरेचनविधिः ४२

तत्र विरेचनयोग्यं रोगिणं स्निग्धस्विन्नं सद्यःस्निग्धस्विन्नञ्च कृत्वा त्रिवृच्चूर्णं सैधंवशुष्ठीचूर्णाभ्यां तथा च मधुना घृतेन वा संयोज्यावलेहयेत्।

ततो यवागूं पाययेत् ततो ह्योराद्वयं यावत्प्रतीक्षेत। पुनः पुनः कोष्णजलं पाययेत् प्रतिवेगानन्तरम्। येनाग्रिमवेगप्रवृत्तिसाहाय्यं भवति। अनागते वेगे पुनः सुधाकल्पघृतं देयमथवा द्वितीय दिने जीर्णे सत्येव विरेचयेत्। येनातियोगो न स्यादिति।

## वस्तिक्रमो यथोत्क्लेशनादिः ४३

तत्र वस्तीनां क्रम उपदिश्यते येन क्रमेणैव ते देयाः। तद्यथा पूर्वं दोषोत्क्लेशनं ततोलेखनं ततः शोधनं ततः शमनं ततो वृंहणं ततो वृष्यं ततः शुक्रलं रसायनमिति ततः स्तम्भनञ्चेति विधिस्तु—मयूखराजे उक्त एव।

## उत्क्लेशनवस्तिः ४४

एरण्डवीजम्, मधुकम्—क्वाथः ६ प्रसृतः; तैलम् २ प्रसृतं; मधु २ प्रसृतं; पिप्पली, वचा, हवुषाफलम्—कल्कः १ प्रसृतः; सैंधवम् १२ माषाः; संयोज्य दद्यात्।

## लेखनवस्तिः ४५

क्षीरवलादि तैलम् ४ प्रसृतं; गोमूत्रम् ४ प्रसृतं; मण्डः ४ प्रसृतः; काञ्जिकम् ४ प्रसृतं; दधि ४ प्रसृतं; सर्षप-कल्कः १ प्रसृतः; संयोज्य देयः।

## शोधनवस्तिः ४६

त्रिफलादिक्वाथः ६ प्रसृतः; तैलम् २ प्रसृतं; मधु २ प्रसृतं; सैंधवम् १२ माषाः; त्रिफलादि कल्कः १ प्रसृतः; संयोज्य देयः।

## शमनवस्तिः ४७

प्रियंगुः, मधुकम्, विल्वः, मुश्ता, रंसाजनम्—क्वाथः ६ प्रसृतः; दुग्धम् ६ प्रसृतं; संयोज्य देयः।

## वृंहणवस्तिः ४८

बला, अतिबला, शतमूली, वानरी—क्वाथः ४ प्रसृतः; मांस रसः, ४ प्रसृतः; क्षीरम् २ प्रसृतं; घृतम् १ प्रसृतं; मधु १ प्रसृतम्।

## वृष्यवस्तिः ४९

क्षीरम् १ प्रसृतम्; इक्षुरसः १ प्रसृतः; रास्नाक्वाथः १ प्रसृतः; विदारीक्वाथः १ प्रसृतः; मधु १ प्रसृतम्; घृतम् १ प्रसृतम्; पिप्पलीकल्कः १/४ (पाद) प्रसृतः

## शुक्रलरसायनवस्तिः ५०

बानरी, नागवला, अतिवला, गोक्षुरः, इक्षुरकः, शतमूली—क्वाथः ६ प्रसृतः; सितोपल चपूर्णम् १ प्रसृतम्; सर्पिः २ प्रसृतं; पयः ३ प्रसृतं; निर्मथ्य देयः ।

## शुक्रस्तम्भनवस्तिः ५१

वानरी, नागवला, अतिवला, गोक्षुरः, इक्षुरकः, शतमूली—क्वाथः ६ प्रसृतः; सितोपलचूर्णम् १ प्रसृतम्; सर्पिः २ प्रसृतं; पयः ३ प्रसृतं; विजया १/४ कर्षः, शुद्धधत्तूरवीजम् १/१२ कर्षः—जलपिष्टे ।

## वाजीकरणवस्तिः ५२

श्वेतगुंजा, चटकाण्डम्—क्वाथः ६ प्रसृतः; क्षीरम् ३ प्रसृतं; मधु १ प्रसृतम्; घृतम् २ प्रसृतम् ।

## पिच्छावस्तिः ५३

मोचरसः १२ माषाः, उष्णजलम् ६ प्रसृतम्—मोचरसं वस्त्रे बद्ध्वोष्ण-जले स्थापनेन स्रवणं भवति; चन्दनादितैलम् १/४ प्रसृतम्; शाल्मलीतरुनिर्यासो मोचरसउच्यते ।

## बल्यपिच्छावस्तिः ५४

वानरी, नागवला, अतिवला, शतमूली—क्वाथः ६ प्रसृतः; सद्यस्क-शोणितम् २ प्रसृतं; मधु १ प्रसृतं; क्षीरम् ३ प्रसृतं; निर्मथ्य देयः ।

## ग्राही वस्तिः ५५

प्रियंग्वादिगणक्वाथः, अम्बष्ठादिगणक्वाथः—क्वाथः ६ प्रसृतः; मधु २ प्रसृतं; घृतम् २ प्रसृतं; क्षीरम् २ प्रसृतम् ।

## बन्ध्यात्वघ्नवस्तिः ५६

१. शतपाकि वलातैलम् समधुसैंधवम् ३ प्रसृतम् ।

२. शतपाकिबला-तैलम् १½ प्रसृतम्; फलघृतम् १½ प्रसृतम्—इति यमकस्नेहवस्तिः।

३. शतपाकि बलातैलम् १ प्रसृतम्; घृतम् १ प्रसृतम्; वसा १ प्रसतम्—इति त्रिवृत्स्नेहवस्ति।

४. शतपाकिबलातैलम् ¾ प्रसृतम्; घृतम् ¾ प्रसृतम्; वसा ¾ प्रसृतम्; मज्जा ¾ प्रसृतम्—इति महास्नेहवस्तिः। अत्रोत्तरोत्तरमधिकंगुणकः।

## मधुतैलवस्तिः ५७

एरण्डमूलक्वाथः ३ प्रसृताः; क्षीरवला तैलम् ३ प्रसृतं; मधु ३ प्रसृतं; सितोपलचूर्णं ६ माषा; सैंधवचूर्णं ३ माषा।

## युक्तरथवस्तिः ५८

मधु ३ प्रसृतम्; क्षीरवला तैलम् ३ प्रसृतम्; दशमूल क्वाथः ३ प्रसृतः; बचापिप्पलीमदनफलचूर्णम् २ कर्षम्; सैंधवम् ¼ कर्षम्;

जिगिमषवे रथाश्वादियानस्थायाऽपि दातुं शक्यते। अर्थात् कार्य्ये संलग्नायापि दातुं शक्यते। न तत्र हानिः।

## सिद्धवस्तिः ५९

पञ्चमूलक्वाथः ३ प्रसृतः; क्षीरवलादि तैलम् ३ प्रसृतं; मधु ३ प्रसृतं सैंधवम् १२ माषा—संयोज्य दद्यात्।

## गुडूचीसिद्धवस्तिः ६०

गुडूचीक्वाथः ६ प्रसृतः; मधु २ प्रसृतं; तैलम् १ प्रसृतम्—जीर्णज्वर प्रमेहादौ विशेषतः।

## यापनवस्तिः ६१

अजाक्षीरम् ६ प्रसृतं; क्षीरवलादि तैलम् २ प्रसृतं; मधु २ प्रसृतं; हवुषाफलकल्कः १ प्रसृतः; सैंधवम् १२ माषा।

## क्षीरवस्तिः ६२

क्षीरम् २ प्रसृतम्; सितोपलचूर्णम् ६ माषा; सैंधवम् ६ माषा; तिक्त घृतम् १ प्रसृतम्; क्षीरवलादि तैलं १ प्रसृतम्; मधु १ प्रसृतम्।

## शीतवस्तिः ६३

यष्टिः, चन्दनम्, लोध्रः, कमलम्, अभया, नीलोत्पलम्, उशीरम्—क्वाथः ६ प्रसृतः; दुग्धम् ४ प्रसृतम्; मधु २ प्रसृते; सितोपलचूर्णं ½ प्रसृतम्।

## वातघ्नवस्तिः ६४

(१) क्षीरम् २ प्रसृतम्; मधु १ प्रसृतम्; क्षीरवलादितैलम् २ प्रसृम्; घृतम् १ प्रसृतम्; एरण्डक्वाथः ६ प्रसृतः।

(२) पञ्चमूलक्वाथः ४ प्रसृतः; तैलम् ३ प्रसृतम्; मधु १ प्रसृतम्; घृतं १ प्रसृतम्।

## कुष्ठघ्नवस्तिः ६५

पटोलम्, रास्ना, निम्बम्, सप्तच्छद, भूनिम्बम्—क्वाथः ६ प्रसृतः; घृतम् १ प्रसृतम्; सर्षपकल्कः १ प्रसृतः।

## कृमिघ्नवस्तिः ६६

विडङ्गः, त्रिफला, मुस्तकम्, शिग्रुः, मूषकपर्णी, मदनफलम्—क्वाथः ६ प्रसृतः; तैलम् १ प्रसृतम्; विड़ङ्गः, पिप्पली—कल्कः १ प्रसृतम्।

## मूत्रकृच्छ्रवस्तिः ६७

श्वदंष्ट्रा १ प्रसृतम्, पाषाणभेदः १ प्रसृतः, एरण्डमूलम् १ प्रसृतम्, यष्टिः १ प्रसृतम्, आह्वा १ प्रसृतम्—क्वाथः ५ प्रसृतः; तैलम् २ प्रसृतम्; सुरा २ प्रसृतम्; आसवः २ प्रसृतम्; सितोपलचूर्णम् १ प्रसृतम्।

विशेषः—क्षीरवलादितैलमुपलक्षणमात्रमेव यत्किंचिदपि वातघ्नतैलं प्रयोक्तुं शक्यते। तथैव वस्तियोगा अपि ज्ञेयाः।

## अनुवासनवस्तिः ६८

क्षीरवलादि तैलम् ३ प्रसृतम्; सैंधवम् १२ माषा; मधु ½ प्रसृतम्।

## मात्रावस्तिः ६९

क्षीरबलादि तैलम् १ प्रसृतम्; सितोपलचूर्णम् ६ माषा; सैंधवम् १२ मषाा।

## शट्यादितैलान्यनुवासनार्हाणि ७०

तत्रानुवासने सुश्रुतोक्तबलादितैलानामपि प्रयोगः कार्यः। कानि च शट्यादितैलानि इत्याकाक्षायामुच्यते। सुश्रुतचिकित्सास्थानोक्तशट्यादि चित्रकादि, भूतिकादि, जीवन्त्यादि, मधुकादि, मृणालादि, त्रिफलादि, पाठादि, विडंगादीनि च। तानि यथायथं देयानि। दोषभेदेन च यथोक्तानि।

## आस्थापनान्यपि च ७१

आस्थापनान्यपि क्रमशो वातरोगे शम्याकादि, गुडूच्यादि। पित्तरोगे कुशादि, रोध्रादि। कफरोगे—भद्रादि, दशमूलादि देयानि। तथा चान्यान्यपि हितानि यानि स्युः।

## सर्वरोगहररास्नादि वा ७२

सर्व रोगहररास्नाद्यास्थापनं वा दद्यात्।

## विशेषतस्तु यथादोषम् ७३

विशेषतस्तु वाते वातघ्नौषधक्वाथाः सैंधवत्रिवृताम्लयुताः सुखोष्णाः। पित्ते न्यग्रोधादि काकोल्यादिगणक्वाथाः शर्कराघृतयुताः शीताश्च। कफे—आरग्वधादि पिप्पल्यादिगणक्वाथाः समधुमूत्राः वस्त्यर्थं देयाः। रक्तरोगेषु रक्तपित्तादिषु तु क्षीरवृक्षाणां न्यग्रोधादीनांक्वाथाः शर्करेक्षुरसक्षीरघृतयुताः शीताः पित्तेइव देयाः।

## यथाकालबलमपि ७४

तथा च शीतकाले शैत्याधिक्ये महाबलाय तीक्ष्णवस्तयो देयाः। उष्णकाले तापाधिक्ये हीनबलाय मृदुवस्तयो देयाः सामान्यकाले मध्यमबलाय च साधारणा एव। तत्र गोमूत्रकल्कसैंधवैर्युतो वस्तिस्तीक्ष्णः। तै रहितो मृदुः। तेषामर्द्धार्द्धमात्राश्चेत्साधारणो वस्तिरिति।

## उत्तरानुवासनास्थापनयोश्च ७५

तथैवोत्तरानुवासने, उत्तरास्थापने च यथादोषं यथारोगं तत्तन्नाशकौषधसिद्धतैलक्वाथादिभिर्वस्तयो देयाः।

## पञ्चमचतुर्थषष्ठाष्टमभागस्नेहो निरूहणे यथादोषम् ७६

तत्र यथादोषं निरूहणेषु स्नेहमात्रा निर्दिश्यते। स्वस्थाय पंचमो भागः स्नेहस्य, वाते चतुर्थो भागः। पित्ते षष्ठो भागः, कफे तु स्यादष्टमो भागः। क्वाथापेक्षयेति भावः।

## गोमूत्रादीनि तैक्ष्ण्यकृद्द्रव्याणि ७७

तत्र वस्तिषु तैक्ष्ण्यं विधातुमुच्यते यत् गोमूत्रं चित्रकलवणक्षारसर्षपादिद्रव्याणि तीक्षणताकराणीति।

## दुग्धादीनि मार्दवकराणीति ७८

तथा च वस्तिमार्दवकराणि तु यथा दुग्धेक्षुरसतिलादीनि। ऐषां योजनात् मार्दवं जायते।

## प्रधमननस्यविधिः ७९

तत्र कटफलचूर्णं वस्त्रपूतं, वातविध्वंसनरसं वा किमपि वान्यं योगं रत्तिकाद्वयं चतुष्टयं वा गृहीत्वा स्वभ्यक्तवाष्पस्विन्नगात्राय नासाच्छिद्रयोरुभयोरूर्ध्वदृष्टिं कृत्वा, ह्रस्वया नाड्या प्रधभेदुच्छ्वसते न तु निःश्वसते। निःश्वसतो ऽग्रहणात्। ततश्छिक्कागमः।

## वृंहणनस्यविधिः ८०

तत्र षड्विन्दुतैलस्य षड्षड् विन्दवो हि खदृष्टेर्नासाच्छिद्रयोर्देयाः। सायं स्वभ्यक्तस्विन्नाय। मर्श एवैषः। तथैवैकविन्दुमात्रा प्रतिमर्शश्च देयः।

## स्वरसनस्यविधिः ८१

जीमूतक (ज़हर तोरई) स्वरसमवपीड्य दश दश विन्दवो देयाः। तीव्र शिरोविरेचनमेतत्प्रातर्विशेषतो जीर्णप्रतिश्याये दीयतेऽवश्यमाशु शोधनाय।

## अवपीडनस्यम् ८२

गुडं शुण्ठीं पिप्पलीं सैन्धवं जलपिष्टानि कृत्वा दद्यात्।

## संज्ञाप्रवोधननस्यम् ८३

मधूकसारं कृष्णां वचां मरिचं सैंधवं जलपिष्टानि कृत्वा दद्यात्। रोहितमत्स्यपित्तेन भावितं वचासैन्धवं दद्यात्

## मरिचादिनस्यम् ८४

मरिचं पिप्पलीं शुण्ठीं कंकोलं लशुनं पुरं कटफलं चूर्णीकृत्य प्रधमेत् ।

## वृंहणनस्यम् ८५

अणुतैलं वा नारायणतैलम् ।

## वैरेचनिकधूम्रनस्यम् ८६

पिप्पलवीज, वायविडंग, सहिजनवीज, सर्षप मरिच, अर्क, लशुन, आर्द्रक, तालीसपत्र, तुलसी, ताड, मधूक, लाक्षा, हिंगु, लवण, मद्यादि वैरेचनिकद्रव्यैर्विनिर्मितधूम्रवर्तिकया चतुर्विंशत्यंगुलप्रमाणायामया, धूम्रं पिवेदिति ।

## न चोपगिलेदसमर्थः ८७

तत्र यत्खलु स्नेहनस्यं तन्नासारन्ध्राभ्याञ्चेन्मुखे प्राप्नोति न तत्पिवेत् । निष्ठीवेदेवोभयपार्श्वं क्रमशः । यः खलु समर्थस्तस्य तु न दोषो भवति । कः समर्थः ? यः नासानिष्ठीवने समर्थः । यस्तु स्नेहनित्यो वा स समर्थः । अतिरूक्षोऽपि समर्थो भवति । नातोऽसमर्थउपगिलेदिति । पार्श्वनिष्ठीवनोपदेशः कथमित्युच्यते ? तत्रोच्यते, सर्वत्र सिरास्रोतः सुप्राप्तिर्भवति नस्यद्रव्यस्य ततः सम्यक्सिद्धिर्भवति । न सम्मुखं निष्ठीवनेन तथेति । दक्षिणवामपार्श्वतो नासारन्ध्राभ्यां निष्ठीवनं सिंघाणकनिष्कासनादि सारल्यार्थञ्च भवति ।

## रक्तमोक्षणविधिः ८८

तत्र श्रृंगालावुभ्यां कार्ये तु तीव्रधारच्छिद्रकेणांगुलद्वयमण्डले त्वचि छिद्राणि कृत्वा मुखेनाचूष्य रक्तं निर्हरेत् । नेदं कर्म वैद्याः कुर्वन्ति घृणितत्वात् । तत्कर्मकरा जातिविशेषा । अन्त्यजादयो वैद्याःलोके (सिंगिहार वैद इति) कुर्वन्ति ते योज्याः कर्मण्यस्मिन् । प्रच्छानंतु वैद्येनैव शस्त्रेण त्वचं प्रच्छिद्य प्रभिद्य वा कार्यम् । सिरावेधोऽपि त्वचं प्रभेद्य यन्त्रेण गृहीत्वा सिराव्यधनं कर्त्तव्यम् । सम्यग्निर्हृते रक्ते स्वयमवरुद्धे व्रणोपचारः कर्तव्यः । जलौकावसेचनं तूक्तमेव पूर्वम् ।

## उत्तरवस्तिविधिः ८९

उत्तरवस्तयस्तु पूर्वोक्तं नेत्रं यथायोग्यं प्रवेश्य मूत्रेन्द्रियादौ देयाः । योगास्तु सर्वविधरोगेषु महासंहितासु द्रष्टव्याः चरकसिद्धिस्थानेऽन्तिमेऽध्याये विशेषतः ।

## पिचुधारणम् ९०

तत्र योनौ रक्तप्रदरादौ स्फटिकजले, दाहयोनिव्रणादौ, गोघृते-तूलिकावस्त्रयोः प्लुतपिचुं प्रवेशयेत्। नितम्बयोरधस्तूच्चैरुपधानं कार्यम् उत्तानाञ्च शाययेत्। शय्या वा पादभागे कार्य्योच्चेति। शिरस्यपि मुण्डं कृत्वा स्नेहपिचुर्धार्यते। योनावपि स्नेहस्य।

## ओदनपाकविधिः ९१

तत्र प्रक्षालितानि विमलानि तण्डुलानि चतुर्गुणेऽम्भसि स्विन्नानि सुप्रस्रुतमण्डानि विशदानि तथा चोष्णानि त्वोदनउच्यते। लघुः स भवति। अप्रस्रुतमण्डानि चेद्गुरु ओदनः शीतश्चेद्गुरुतरो भवति।

## विलेपीपाकविधिः ९२

तत्र चतुर्गुणेऽम्भसि सिद्धा ससिक्था किंचिद्द्रवा च विलेपी भवति। लेपितुं शक्यते या सैव विलेपीत्युच्यते द्रवत्वात्। लोके गुलाथी इति प्रसिद्धा।

## यवागूपाकविधिः ९३

गोधूमपिष्टिः षोडशगुणेऽम्भसि सिद्धा विरलद्रवा यवागूः कथ्यते। सा स्नेहलवणजीरकादिभिः संस्कृताऽपि भवति। लोके लपसी इति प्रसिद्धा।

## सूपपाकविधिः ९४

तत्रमाषमुद्गाढ़कीमसूरादीनां धान्यानांकृतद्विदलानां षोडशगुणेऽम्भसि पाकाद्यवागूरिव द्रवः सूप उच्यते। स घृतजीरकहिंगुलशुनादिभिः संस्कृतो लवणान्वितश्च साध्यते। सतुषोनिष्तुषश्चोभयथा। लोकेऽद्यत्वे दाल इति प्रसिद्धा।

## शाकपाकविधिः ९५

कूष्माण्डालाव्वादीनि शाकानि स्नेहादिसंस्कृतानि लवणान्वितानि निष्पीडितानि सिद्धानि हितानि भवन्ति।

## यूषपाकविधिः ९६

मुद्गादिधान्यानां षोडशेगुणेऽम्भसि पक्वानां प्रस्रुतो द्रवोऽकृतयूषः

कथ्यते । स्नेहजीरकादिभिस्संस्कृत:सलवणश्चेत् कृतयूष इत्युच्यते लोके जूसइत्यपभ्रंश:

## काम्वलिकनिर्माणविधि: ९७

तत्र यूषश्चेद्दधिमस्तुना, अम्लैर्वा सिद्धः स काम्वलिक उच्यते । लोके (सिखरन) इति प्रसिद्धः ।

## खडनिर्माणविधि: ९८

खड: खल्वपि शाकैरलाव्वादिभिस्तक्रयोगेन लवणजीरक सर्षप मरिचादि यथेष्टै: संयुत: साध्यते । लोके "रायता" इति कथ्यते ।

## सक्तुनिर्माणविधि: ९९

यवादि धान्यानि अहोरात्रं यावज्जले क्षिप्त्वा, निस्सार्य शुष्कीकृत्य भर्जितानि पिष्टानि सक्तुरित्युच्यते । तितउना पूतः लोके सत्तू प्रसिद्धोऽपभ्रंश: ।

## पेयानिर्माणविधि: १००

षडगुणेऽम्भसि तण्डुलानि सिद्धानि चेत्सा ससिक्था द्रवा पेयोच्यते । सलवणा च चतुर्दशगुणेऽप्यम्भसि केचित् ।

## मांसरसनिर्माणविधि: १०१

तत्राभीष्टाजादीनांमांसानां चतुर्गुणेऽम्भसि स्विन्नानां प्रस्नुतयूषो मांसरस उच्यते । सोऽकृतरसो भवति । स्नेहहरिद्रामरिचादिभिरन्वित:, संस्कृत इति सलवणश्च कृतरसउच्यते ।

## अकृतात्कृतो गुरु: १०२

तत्राकृतयूषाद्रसाद्वा कृतयूषो रसो वा गुरुर्भवति । तैलादिद्रव्यबाहुल्यसंयोगात् ।

## गन्धर्वहस्तादि गण: १०३

गन्धर्वहस्त, चीजीविल्व, कुताश त्रिश्व पथ्या, पुनर्नवा, यवाशक होमितालीति ।

## काकोल्यादि गणः १०४

काकोली, क्षीरकाकोली, जीवक, ऋषभक, मुद्‌गपर्णी, माषपर्णी, मेदा, महामेदा, गुडूची, कर्कटश्रृंगी, तुगाक्षीरी, पद्मक, प्रपौण्डरीक, ऋद्धि, वृद्धि, मृद्वीका, जीवन्ती, मधुकमिति ।

## विदारिगन्धादिगणः १०५

विदारिगन्धा, विदारी, विश्वदेवा, सहदेवा, श्वदंष्ट्रा पृथक्पर्णी, शतावरी, सारिवा, कृष्णसारिवा, जीवक, ऋषभक, महासहा, क्षुद्रसहा, वृहतीद्वय पुनर्नवा, एरण्ड, हंसपादी, वृश्चिकाली, ऋषभी चेति ।

## आरग्वधादि गणः १०६

आरग्वध, मदनफल, गोप, घोण्टा, कण्टकी, कुटज पाठा, पाटला, मूर्वा, इन्द्रयव, सप्तपर्ण, निम्ब, कुरण्टकदासी, कुरुण्टक, गुडूची, चित्रक, शार्गष्टा (काकमाची), करञ्जद्वय, पटोल, किरात, तिक्तक सुषवी चेतिगणः मेहकुष्ठ-ज्वरवमीकण्डूघ्नो व्रणशोधनश्च । श्लेष्मविषापहश्चेति । शम् ।

## इति संक्षिप्तनिर्देशः १०७

इति षट्कर्मणां संक्षिप्तनिर्देशः समाप्तः । विस्तरस्तु महासंहितासु द्रष्टव्यः ।

## इति सप्तविंशत्युत्तरशतपञ्चसूत्रात्मकमिदं षट्कर्मशास्त्रं समाप्तं सहैतेनापि सूत्रेण १०८

सप्तविंशत्युत्तरशतपञ्चकानि सूत्राणि खल्वस्मिन षट्कर्मशास्त्रे सहैतेनापि संख्यानिर्देशकेन सूत्रेणेति ज्ञेयम् । तद्यथा प्रतिमयूखं चतुर्दशचतु-स्त्रिंशत्षड्विंशति त्रिपञ्चाशदेकादशद्वित्रिंशद्द्वादशैकोनविंशतिचत्वारिंशदेकोनविंशतिपञ्चत्रिंशदेकसप्तत्यष्टादशषोडशैकोनविंशत्यष्टोत्तरशतानि सूत्राणि । तदिदं समाप्तम् । यच्चात्र प्रामादिकं तत्तु हेयं शोध्यं वा

### इति श्रीजगदीशाचार्य विरचिते षट्कर्मशास्त्रे षोडशो महामयूखः

### इति षट्कर्मशास्त्रम् समाप्तम्

इति पुष्करतीर्थक्षेत्रीयविरञ्च्यावासग्रामाभिजनस्य वाराणसेयपाणिनिमहाविद्यालय-प्राचार्यस्य भाराद्वाजगोत्रस्य विद्वत्कुलपूजितस्य चतुर्दिग्लब्धकीर्तेरनवरत-ज्ञानोदधिनिमज्ज-नगृहीतनानामूल्यरत्नस्य युधिष्ठिर-मीमांसकाचार्यस्य, वाराणसेयसंस्कृतविश्वविद्यालयवेदा-न्तविभागाध्यक्षसर्वशास्त्रविशारदस्य नानादेशागतान्ते-वासिसहस्रप्रणमन्मूर्धालंकृतपादपंक-जस्य बालेयाजनपदीयच्छाताग्रामनिवासिनः श्रीरघुनाथशर्मणो, व्याकरणविभागाध्यक्ष-विद्वच्छिरोमणिपण्डितवरेण्यस्य गोरक्षपुरनिवासिन आचार्यमुरलीधरमिश्रस्य, पाञ्चालप्र-देशीयरोपड़मण्डलान्तर्गतचूर्णियांग्रामवासिनो वाराणसेयार्जुनायुर्वेदमहाविद्यालयप्राचार्यस्य श्रीलालचन्द्रवैद्यस्य च शिष्येण सांख्य-योग-व्याकरणायुर्वेदाचार्येण वाराणसेयसंस्कृत-विश्वविद्यालयस्नातकेन बालार्कजनपदीयहिमगिर्युपत्यकाप्रसिञ्चनपटुसरयूतटसमुसल्लस-न्महिषीग्रामवासिना चित्रगुप्तगोत्रोत्पन्नेन पेंशनगर्भजेन परमाणुदर्शनकारेणोत्तरप्रदेश-राजकीयचिकित्साधिकारिणा जगदीशाचार्येण प्रणीतमिदं षट्कर्मशास्त्रं समाप्तम् ॥

# शुद्धिपत्रम्

| सं० | पृष्ठ | सूत्र | भाष्य | पंक्ति | शुद्धिः |
|---|---|---|---|---|---|
| १ | १७ | २२ | | | त्र्यणुकादिषु |
| २ | २२ | २४ | ,, | १ | मृदुपाक |
| ३ | २९ | ४९ | ,, | १ | वातस्यातिवृद्धस्य |
| ४ | ३७ | ३ | ,, | १ | वमनेन |
| ५ | ३८ | ७ | ,, | १ | क्लम |
| ६ | ३८ | ७ | ,, | ६ | शीतलजलावसेचनेन |
| ७ | ३९ | १२ | ,, | १ | कारणान्युच्यन्ते |
| ८ | ४० | | ,, | ३ | शिरःपीडां |
| ९ | ४१ | २ | | | स्वेद्यादयःस्नेह्याः |
| १० | ४९ | ३० | ,, | ३ | कर्णाक्षितर्पणाञ्जनानि |
| ११ | ४९ | ३२ | ,, | ४ | सदक्लेद्यैव लोष्ठं |
| १२ | ४९ | ३३ | ,, | ४ | सद्यःस्नेहनकरणाय |
| १३ | ५० | ३९ | ,, | ५ | सहैव देयं |
| १४ | ५१ | २ | ,, | ७ | कामज्वरोरुस्तम्भादिषु |
| १५ | ५२ | ७ | ,, | ३ | अग्निसंसर्गजौष्ण्यादग्निस्वेदोऽयम् |
| १६ | ५३ | १५ | ,, | २ | दुर्बलस्वेद, प्रधानबलो |
| १७ | ५५ | १४ | ,, | १ | षट्स्वेव वेगेषु |
| १८ | ५६ | १७ | ,, | १ | तथैव मध्याल्प |
| १९ | ५६ | १७ | ,, | ३ | तदा हीनशुद्धि |
| २० | ५६ | २० | ,, | २ | गतिवृद्ध्या हि |
| २१ | ५६ | २० | ,, | ३ | यथाशुद्धिरेव |